सिद्धम्-त्रैगुण्यविपर्ययाच्चैव तत्संयोगः तत्कृतः सर्गः" इति सांख्यकारिका। पूर्वमीमांसकैस्तावत् स्वर्गकामस्य यजमानस्यात्मा शरीरादन्य एवेत्यवश्यमभ्युपेयम् यतो न कोऽपि सोमयाजी सशरीरः स्वर्गसुखं विन्दति। ज्योतिष्टोमादिफलभूतस्वर्गमधिगन्ता जीवः शरीरात् अर्थात् मृतकलेवरात् अन्य एव भवति। तस्माद् देहे अहंप्रत्ययस्य भ्रान्तिकल्पितत्वे अङ्गीकृते, कर्तृत्वाद्यंशे बुद्ध्यारोपिताहंप्रत्ययस्यापि श्रुतिबलात् भ्रमत्वं वक्तुं युज्यते।

स्वयंप्रकाशे ब्रह्मणि कर्तृत्वाध्यासासम्भवः इति च, न वाच्यम् ; दृष्टानुसारित्वात् कल्पनायाः। संसारे कर्तृत्वभोक्तृत्वादिधर्मैः बहुक्लेशमनुभवत्सु जीवेषु अध्यासो न सम्भाव्य इति कथनमसाम्प्रतम्। अनाद्यविद्यावशादध्यासः अङ्गीक्रियते, "एतद्यो वेद निहितं गुहायां सोऽविद्याग्रन्थिं विकिरतीह सोम्य" इत्यादिश्रुतिबलाच्च अविद्यानिवृत्तेरपि सम्भवात्, तत्साधनतया श्रवणादीनि विहितानि इत्युत्तरः पक्षः।

7. अत्रोच्यते पूर्वपक्षः, श्रवणं विधीयते इत्यनुपपन्नम् श्रवणस्य श्रोत्रेन्द्रियकर्मत्वात् "स्वाध्यायोऽध्येतव्यः" इति वाक्येनैव वेदाध्ययनसमये वेदान्तानामध्ययनात् श्रवणं सम्पन्नमिति।

"वेदस्याध्ययनं सर्वं गुर्वध्ययनपूर्वकम्।
वेदाध्ययनसामान्यादधुनाध्ययनं यथा ॥"

इति वचनात् श्रोत्रेन्द्रियद्वारैव श्रुतेरध्ययनं सिद्धमिति। तस्मात् श्रवणं विधीयते इत्यनुपपन्नमिति।

'वेदार्थं शृणोति' इत्यादिप्रयोगदर्शनात् अर्थज्ञानेऽपि श्रुधातोः शक्तिरस्ति, तस्मादर्थज्ञानबुद्ध्या श्रवणं विहितमिति समाधातुं च न शक्यते। तथा सति श्रवणपदस्य ध्वनिग्रहणे अर्थज्ञाने च शक्तिद्वयकल्पनापेक्षया लक्षणयैवोपपत्तिः। लक्षणाङ्गीकारे च 'वीणानादं शृणोति' इत्यादावर्थज्ञानाभावेन घटते ध्वनिग्रहणं वाच्यार्थः! यत्र पुनरर्थोऽपि ज्ञायते तत्र लक्षणालम्। अथवा अर्थज्ञाने शक्तौ सत्यामपि साङ्गस्वाध्यायमधीत्य पदपदार्थव्युत्पत्तिमतः अर्थज्ञानं भूतपूर्वमेव। सत्यं ज्ञानमित्यादि ज्ञात-

चरमेव, तस्मात् श्रवणं न विधातुं शक्यम् इति पूर्वपक्ष एव प्रसरति। अवधारणात्मकमपि ज्ञानमध्ययनविधिनैव सिद्ध्यति न केवलमापातज्ञानाय अध्ययनम्, तस्मादवधारणार्थं श्रवणविधिरिति न वक्तव्यम् इति पूर्वपक्षस्यैवांशः अनुवर्तते।

अवधारणात्मकज्ञानमपि अध्ययनविधिना लभ्यते इति हेतोः, श्रवणस्य विचार एवार्थः अभिप्रेयते, यः अवधारणात् परं भावी, स च वाच्यार्थ एव स्यात् विधौ लक्षणापत्तिप्रसङ्गात् अर्थात् विधौ लक्षणा नेष्यते इति हेतोः विचार एव श्रवणशब्दस्यार्थः यः श्रोतव्यपदेन विधीयते इति पूर्वपक्षस्यान्तिमं प्रतिपादनम्।

अस्मिंश्च प्रतिपादने श्रोतव्यपदस्य विचारो विधेयः इत्यर्थमङ्गीकृत्य लक्षणात्ववश्यम्भाविनी, विधौ लक्षणाया बहुत्र दृष्टचरत्वात् इति सिद्धान्तः बहूदाहरणैः वितन्यते। तथाहि :- "अर्धमन्तर्वेदि मिनोति अर्धं बहिर्वेदि" इति वाक्ये मिनोतीत्यस्य मिनुयादिति परिणामं कृत्वा विधिवाक्यत्वं निश्चीयते पञ्चमलकारत्वमाश्रित्य। अस्मिन् विधिवाक्ये मीयमानस्य यूपस्य वेद्यभ्यन्तरभागः अङ्गत्वेन विधीयते इति पूर्वः पक्षः। मैवम्। अर्धमन्तर्वेदीत्येनेन वेद्यभ्यन्तरभागस्य यूपमानङ्गन्वेन विधानं यद्यङ्गीक्रियेत, तर्हि बहिर्वेदीत्यनेन पूर्ववदेवासंस्कृतः वेदिबहिर्भागोऽपि यूपमानाङ्गत्वेन विधेयः स्यात्। ततश्च वाक्यभेदः प्रसज्येत। अतः तादृग्दोषप्रसक्तिवारणाय वेद्यभ्यन्तरबाह्यभागाभ्यां उपलक्षितः यः असंस्कृतो देशविशेषः लौकिकः सः यूपमानाङ्गत्वेन लक्ष्यते। ततो नास्ति वाक्यभेदप्रसक्तिः। तस्मात् लौकिकदेश एवात्र वाक्यद्वयोपलक्षितः यूपाङ्गत्वेन विधीयते इति निर्णयः कार्यः।

"जातपुत्रः कृष्णकेशः अग्नीनादधीत" इत्यत्र जातपुत्रत्वकृष्णकेशत्वाभ्यां वयोविशेषो लक्ष्यते इति मीमांसान्यायप्रकाशादौ विस्तरेण विशदीकृतः। "उच्चैः ऋचा क्रियते, उपांशु यजुषा, उच्चैः साम्ना" इति। तत्र विधिवाक्ये मन्त्रवाचिनामृगादिशब्दानां प्रयोगात् मन्त्रधर्मा उच्चैस्त्वादयः। तथा सति यजुर्वेदोत्पन्ना अध्वर्युणा प्रयुज्यमाना अपि ऋचः उच्चैरेव पठितव्या इति चेत् मैवम्। असञ्जातविरोधित्वेन प्रबलमुपक्रममनुसृत्य

तद्दर्शनोपसंहारस्य नेतव्यत्वात् । उपक्रमे हि वेदशब्दः श्रुतः –"त्रयो वेदा असृज्यन्त अग्नेः ऋग्वेदः, वायोः यजुर्वेदः, आदित्यात् सामवेदः" इति। अत उपक्रमानुगतवेदानुसारेण विध्युद्देशगतानामपि ऋगादिपदानां वेदपरत्वे सति ऋचोऽपि यजुर्वेदोत्पन्नाः उपांशु पठनीयाः । ततः ऋगादिपदानां वेदपरत्वं लक्षणीयं भवति विधिस्थले ।

"यावतोऽश्वान् प्रतिगृह्णीयात्" इत्यत्र प्रतिग्राहयेदित्यर्थे गृह्णीयादिति प्रयुक्तः । तस्मात् विधौ णिजर्थे लक्षणा विस्पष्टा ।

"नेक्षेतोद्यन्तमादित्यम्, नार्षेयं वृणीते" इत्यत्र पर्युदासो लक्ष्यते ।

प्रसज्यप्रतिषेधोऽयं क्रियया सह यत्र नञ् ।
पर्युदासस्स विज्ञेयः यत्रोत्तरपदेन नञ् ॥

नञश्चैष स्वभावः यत् स्वसम्बन्धिप्रतिपक्षबोधकत्वम् । तदिह लिङर्थस्तावत् प्रवर्तना । अतस्तेन सम्बध्यमानः नञ् प्रवर्तनाप्रतिपक्षां निवर्तनां बोधयति । निषेधेषु निवर्तनैव वाक्यार्थः यदर्थं लक्षणाङ्गीक्रियते । "नेक्षेतोद्यन्तमादित्यम्" इति – यत्र तस्य व्रतमित्युपक्रमः विकल्पप्रसक्तिश्च तत्र पर्युदासः । प्रत्ययेनान्वये यदि बाधकम् तदा धात्वर्थेनान्वयो यथा – "नेक्षेतोद्यन्तमादित्यम्" आदित्यस्यानीक्षणसंकल्पेनेष्टं भावयेत् इति शाब्दबोधः भवति । आदित्यानीक्षणमत्र लक्षणया ।

"नार्षेयं वृणीते" इत्यत्र आर्षेयभिन्नं वृणुयात् इति शाब्दबोधः । "न कलञ्जं भक्षये"दित्यादौ बलवत्तरानिष्टसाधनं च लक्षणयैवेति ग्रहीतव्यम् । तस्मात् विधौ लक्षणायां न किञ्चित् बाधकम् । श्रवणविधौ च लक्षणा स्यादेवेति ।

शब्दस्वरूपज्ञानेन अर्थज्ञानेन अवधारणेन च न पर्याप्तिः "आत्मनि विज्ञाते इदं सर्वं विदितम्", "एतावदरे खल्वमृतत्वम्" इति बृहदारण्यके उपसंहारात् तदवधि ब्रह्मात्मैक्यविचारः विधेयः एव, यः श्रोतव्यपदस्य जिज्ञासापदस्य वा लक्ष्यः इति निगमयति । "नापि प्रयोजनम्, उक्तरूपब्रह्मज्ञानेऽपि मुक्तेरदर्शनात्" इति मिताक्षराप्रोक्तपूर्वपक्षस्येदमित्थतया

समाधानमन्नम्भट्टपादैरुल्लेखनपूर्वकं न दत्तम् । तच्च समाधानमस्मिन्नेव प्रसङ्गे आनुषङ्गिकमिति सुधीभिरूह्यम् । उपनिषदामर्थावधारणात् तात्पर्यावगमात् वा मुक्तिर्न सम्भाव्यते । "आ सुप्तेरामृतेः कालं नयेत् वेदान्तचिन्तया" इति स्मृतिसूक्तिमनुसृत्य निरन्तरं ब्रह्मात्मैक्यविचारः मनननिदिध्यासनसहकृतः करणीयः । अन्ततः अविद्यानिवृत्तावेव अपरोक्षानुभूतिरथवा ब्रह्मात्मैक्यसाक्षात्कारः स्यादिति श्रवणमनननिदिध्यासनानामाग्रन्थमाजीवनं च साधनत्वमव्याहतम्-इत्याकारकं समाधानमत्रान्तर्भूतम् । 10. गमनिका :- "आत्मनि विज्ञाते इदं सर्वं विदितम्" एतावदरे खल्वमृतत्वम्" इत्युपसंहारदर्शनादात्मज्ञानमेव तत् प्राप्त्युपाय "इति" निश्चीयते। तथा च तादृशात्मज्ञानं द्रष्टव्य इत्यनूद्यते । दर्शनसाधनापेक्षायां—"मनननिदिध्यासनसहकृतं विचारितवेदान्तवाक्यमात्मसाक्षात्कारहेतुरित्ययमर्थस्सम्पद्यते" इति मिताक्षरायामात्मज्ञानमुपायत्वेन निर्दिष्टम् । दर्शनसाधनापेक्षायामित्युक्त्वा दर्शनं (आत्मज्ञानं) प्रति श्रवणमनननिदिध्यासनानामङ्गत्वमभिहितम् । अयमेव प्रमादः अस्माभिस्संसूचितो भविष्यति "श्रवणविधौ" "अपरोक्षज्ञानजनकत्वे च शब्दस्य" । द्रष्टव्यपदेनानूद्यमानमात्मज्ञानं साधनं सत् श्रवणमनननिदिध्यासनानां कृते साध्यतां कथमन्वियात् ? "न हि अन्योपसर्जनमन्येनान्वेति" इति गुणानां च परार्थत्वादसम्बन्धः समत्वात् स्यात्" इति च शास्त्रविदो जानन्त्येव। प्रकरणानुरोधेन चास्माभिः आत्मा द्रष्टव्यः इत्यस्य "आत्मनस्तु कामाय सर्वं प्रियं भवति" इत्याकारकं सर्वोत्कृष्टपरमप्रेमस्वरूपाभिलक्षणमेवात्मज्ञानं प्रोच्यते यत् उपायभूतं श्रवणवत् मननवत् निदिध्यासनवच्च । "एतावदरे खल्वमृतत्वम्" इत्युक्तमपरोक्षब्रह्मात्मैक्यदर्शनं प्रति चतुर्णामेषां साधनत्वमिति।

अथायं श्रवणविधिरपूर्वविधिः नियमविधिः परिसंख्याविधिर्वेति विचार्यते । तथाहि :-

"विधिरत्यन्तमप्राप्ते नियमः पाक्षिके सति ।
तत्र चान्यत्र च प्राप्तौ परिसंख्येति गीयते " ॥

इत्युक्तलक्षणानि विशदीकृतानि तत्रभवतान्नम्भट्टेन। "व्रीहीन् प्रोक्षति" इत्ययमपूर्वविधिः। अत्र विधिं विना प्रोक्षणं कथमपि न प्राप्तम्। तस्मादयमपूर्वप्राप्तिफलः अपूर्वविधिः। श्रोतव्यपदलक्ष्य विचारं कर्तुं जिज्ञासुजनः स्वयं प्रवर्तते स्वमतिशक्त्यनुरोधात् ततो विधिरयमपूर्वः न भवितुमर्हति।

11. व्रीहीनवहन्तीत्यत्र पुरोडाशप्रकृतिद्रव्याणां व्रीहीणां तण्डुलनिष्पत्त्याक्षेपादेव अवहननं प्राप्यते इति नापूर्वविधिः। "इमामगृभ्णन् रशनामृतस्य इत्यश्वाभिधानीमादत्ते इत्यत्र लिङ्गादेव मन्त्रः रशनाग्रहणे नित्यं प्राप्नोति। लिङ्गं च शब्दसामर्थ्यम्। सामर्थ्यं च रूढिरेव। तथा गर्दभाभिधान्यामपि मन्त्रः प्राप्नुयादिति तन्निवृत्तिपरकः परिसंख्याविधिः। अवहन्तीतिवत् श्रोतव्य इति नियमविधिरित्यङ्गीकारे सति, नियमविधौ सति वन्नावर्त्येन केनचित् भाव्यम्। अत्रोच्यते "द्वा सुपर्णा सयुजा सखाया"-वित्यादि वाक्याद्दापाततः भिन्नात्मज्ञानप्राप्तौ तद्व्यावृत्तये नियमविधिरिति।

विवरणमतमनुवदता मिताक्षरायामेवमुक्तं तत्रभवता। भेदनिरासप्रकरणे स्वरचिते तु सम्यङ् निरूपितं तत्रभवता "तावेतौ सत्त्वक्षेत्रज्ञौ इति बुद्धिक्षेत्रज्ञपरतया पैङ्गिरहस्यब्राह्मणे व्याख्याततत्त्वेन विरोधगन्धानवकाशात्। अजामेकामित्यत्रापि मुक्तसंसारिभेदप्रतिपादनेन जीवानामेव भेदः प्रतिपाद्यते, न तु जीवपरमात्मनोः" इति। वस्तुतः साधनान्तरप्राप्तावेव नियमविधिः न त्वापातत इति शङ्कायामुक्तं विव्रियते :-

श्रीरामेश्वरशिष्ययोगिभिक्षुप्रणीताया अर्थसंग्रहकौमुदीव्याख्याया अनुसारेण व्रीहीनवहन्तीत्यत्र सूक्ष्मेक्षिकया विचार्यमाणे, व्रीहीणामेव व्रीहित्वेनोपादेयता नास्ति। दध्ना जुहोति, पयसा जुहोति इत्यादौ वेदचोदनामनुसृत्य क्रियमाणेषु हवनेषु किञ्चिदवश्यमपूर्वं भावीति मीमांसकैः निर्धारितम्। तथाहि :- यागेन स्वर्गं कुर्यात् इति तावत् फलवाक्येन यागस्य फलसाधनत्वं बोध्यते। तत्र च कथं विनश्वरेण स्वर्गः कर्तव्यः तस्य कालान्तरभावित्वादित्याकांक्षायामपूर्वं निष्पाद्येत्युच्यते। अपूर्वं पुनः कथं निष्पादनीयमित्याकांक्षायां प्राच्योदीच्याङ्गविशिष्टस्य यागस्य अनुष्ठानप्रकारेणेत्युच्यते। तच्चापूर्वं दर्शपूर्णमासयोरनेकविधम्। फला-

पूर्वं समुदायापूर्वं उत्पत्त्यपूर्वं अङ्गापूर्वञ्चेति । तत्र येन स्वर्गः क्रियते तत् फलापूर्वमित्युच्यते, फलजनकत्वात् तच्च समुदायापूर्वेण जन्यते । समुदायश्च द्विविधः अमावास्यायां त्रयाणां यागानामेकः समुदायः, पौर्णमास्यां च त्रयाणां यागानामपरः समुदायः, ताभ्यां जन्यं यदपूर्वं तत् 12. समुदायापूर्वमित्युच्यते । समुदाययोश्च भिन्नकालवर्तिनोः संहृत्य फलापूर्वजननायोगात्, तज्जननाय समुदायद्वयजन्यस्यापूर्वद्वयस्यावश्यंकल्पनीयत्वात् । अमावास्यायां समुदायस्तु "ऐन्द्रं दध्यमावास्यायां ऐन्द्रं पयोऽमावास्यायां" इति वाक्यविहितौ सान्नाय्ययागौ "यदाग्नेयः अष्टाकपाल." इति वाक्यविहितः आग्नेयश्च तेषां त्रयाणां भवति । पौर्णमास्यां समुदायस्तु "यदाग्नेयः अष्टाकपालः अमावास्यायां च पौर्णमास्यांचाच्युतो भवति" इत्याग्नेययागो विहितः । "ताभ्यामेतमग्नीषोमीयमेकादशकपालं पूर्णमासे प्रायच्छत्" इत्यग्नीषोमीययागो विहितः । 'उपांशुयागमन्तरा यजति' इत्युपांशुयागः, 'तावब्रूतावग्नीषोमावाज्यस्यैव तावुपांशु पौर्णमास्याम्' इति वाक्येन विहितः । तेषां त्रयाणां च भवति, तयोस्तु समुदाययोः मध्ये एकसमुदायवर्तिनां त्रयाणां यागानां भिन्नक्षणवर्तिनां संहृत्य समुदायद्वयजन्ययोः अपूर्वयोः एकापूर्वजननायोगात् तज्जननाय यागत्रयजन्यानि त्रीण्युत्पत्त्यपूर्वाणि कल्पनीयानि । तेषां चाङ्गोपकारमन्तरेण अनुत्पत्तेः अङ्गानां चानेकक्षणवर्तित्वेन संहृत्य उत्पत्त्यपूर्वारम्भायोगात् तदारम्भाय अङ्गापूर्वाणि सन्निपत्योपकारकादीनि कल्पनीयानि । विनियोगविधिबोधितानि अङ्गानि द्विविधानि सिद्धरूपाणि क्रियारूपाणि चेति । तत्र सिद्धानि जातिद्रव्यसंख्यादीनि । तानि च दृष्टार्थान्येव । क्रियारूपाणि च द्विविधानि गुणकर्माणि प्रधानकर्माणि चेति । एतान्येव सन्निपत्योपकारकाणि आरादुपकारकाणि चेत्युच्यन्ते । तत्र कर्माङ्गद्रव्याद्युद्देशेन विधीयमानं कर्म सन्निपत्योपकारकम् । तच्च दृष्टार्थमदृष्टार्थं दृष्टादृष्टार्थं चेति । तत्र दृष्टार्थमवघातादि, दृष्टादृष्टार्थं पशुपुरोडाशादि । अवघातादेः तुषविमोकरूपदृष्टार्थद्वारा यागस्वरूपतदुत्पत्त्यपूर्वहेतुत्वात् सम्भवति तस्य दृष्टार्थत्वम् । द्रव्याद्यनुद्दिश्य केवलं विधीयमानं कर्म आरादुपकारकम् यथा प्रयाजादि । आरादुपकारकं च परमापूर्वोत्पत्तावेवोपयुज्यते । सन्निपत्योप-

कारकन्तु द्रव्यदेवतासंस्कारद्वारा यागस्वरूपेऽप्युपयुज्यते । इदमेव चाश्रयिकर्मेत्युच्यते । 13. एवंप्रकारेण सन्निपत्योपकारकाणि अवघातप्रोक्षणादीनि द्रव्यदेवतासंस्कारद्वारा यागस्वरूपस्यैवातिशयजननेन यागोत्पत्त्यपूर्वोत्पत्तौ तद्वारेण फलापूर्वोत्पत्तौ च व्याप्रियन्ते । तथा च दृष्टार्थमपि अवहननं तदर्थमुपात्ता व्रीहयो वा अपूर्वापेक्षया नियन्त्रिता एव । अपूर्वार्थमेव व्रीहीणामुपादानं यवानां पयसः दध्नो वा । तथा सति द्रव्यदेवतासंस्कारद्वारा यागोत्पत्त्यपूर्वविधावुपयुक्ते अवहनने, तण्डुलमात्रेऽपि कथञ्चिदेवापाततः एव पक्षे नखविदलनं प्राप्नोति । तस्मादापाततः प्राप्तनखविदलनस्य वारणाय अवहनने यथा नियमविधिरुच्यते, तथा द्वासुपर्णेति मुण्डकोपनिषद्वाक्यप्राप्तात्मनानात्वनिवारणायाद्वैतब्रह्मविचारः कर्तव्य इति नियमविधिरत्रापि युज्यत एव ।

एवं नियमविध्यङ्गीकारे परिसंख्याविधेरावश्यकता नास्ति । विवरणमते ततः तन्निराकरणप्रयत्नो न कृतः । कृतस्तु वाचस्पतिमिश्रानुयायिभिः जिज्ञासाधिकरणस्यान्ते । "श्रुतार्थस्य परित्यागात् अश्रुतार्थस्य कल्पनात् । प्राप्तस्य बाधादित्येवं परिसंख्या त्रिदूषणा ।" श्रुतस्य ब्रह्मात्मैक्यविचारस्य परित्यागः, अश्रुतस्य असाधनस्य व्यापारान्तरस्य निषेधकल्पना, साधनत्वेन प्राप्तस्य भिन्नात्मविचारस्य बाधश्चेति त्रैदोष्यात् परिसंख्या नाङ्गीकर्तव्येति । विधित्वमेव श्रवणस्य ये नेच्छन्ति तैः परिसंख्याविधिः निरस्तः । नियमविधिमभ्युपयतां पुनः कीदृशी आवश्यकता परिसंख्याविध्यङ्गीकारे ? नैवेतियावत् । तस्मात् जिज्ञासापदस्य लक्षणया विचारः अर्थः, अयं च नियमविधिः, पुरुषप्रवृत्तिसिद्धये कर्तव्येति पदमध्याहर्तव्यम् इति विवरणमतं प्रख्यापितम् ।

अत्रायं पूर्वः पक्षः :– ज्ञाधातोः सन् प्रत्ययस्य च समुदायस्य शक्यार्थो न तादृशः यस्य सम्बन्धेन विचारो लक्षयितुं शक्यते । तस्मात् लक्षणा न सङ्गच्छते । समुदाये शक्त्यभावात् इति ।

14. "अत्राहुः" इत्यनेन विवरणमतानुसारं लक्षणाद्वयं वर्णयति ।:– सन्प्रत्ययस्य लक्षणया विचारः अर्थः । ज्ञाधातुना च साध्यावस्थं ज्ञानं

साध्यतयोच्यते । सन्प्रत्यये लक्षणा जहल्लक्षणा स्यात्, प्रकृतेः ज्ञाधातौ लक्षणा अजहल्लक्षणा । साध्यावस्थं ज्ञानं ज्ञानसामान्यान्तर्गतत्वात् अजहल्लक्षणयोच्यते । अजहल्लक्षणा अवश्यम्भाविनी साध्यावस्थां विना ज्ञानस्य, साधनभूतविचारस्य अन्वयायोगात् । स्वार्थपरित्यागेन अर्थान्तरसम्बन्धः जहल्लक्षणा । शक्यार्थापरित्यागेनेतरार्थलक्षणं अजहत्स्वार्था, तदपरित्यागश्च येन केनापि रूपेण लक्ष्यार्थान्वयिना अन्वयित्वम्, तेन छत्रिणो यान्ति, कुन्तान् प्रवेशय, काकेभ्यो दधि रक्ष्यतामित्यादौ न दोषः । स्वार्थपरित्यागश्च शक्यार्थस्य केनापि रूपेण लक्ष्यार्थान्वयिना अनन्वयित्वम् । अतो गां वाहीकं पश्येत्यादौ न दोषः । एवं लक्षणाद्वयमवश्यम्भावि ।

अत्र केचिदिति वाक्यलक्षणावादिनामाशयः पूर्वपक्षतयोपस्थाप्यते :— "वायुर्वैक्षेपिष्ठा देवता" इत्याद्यर्थवादस्थले कृत्स्नं वाक्यं यागप्राशस्त्यं बोधयति । "अर्धमन्तर्वेदि मिनोति अर्धं बहिर्वेदि" इति वाक्ये मिनोतीत्यस्य मिनुयादिति परिणामं कृत्वा विधिवाक्यत्वं निश्चीयते । अस्य पूर्वपक्षे अर्धमन्तर्वेदि मिनोति इत्येतेनैव यूपमानाङ्गत्वविधानं सम्भवति । सिद्धान्ते अन्तर्वेदि बहिर्वेदि इति कृत्स्नवाक्येन अन्तर्वेदि बहिर्वेदिपदाभ्यामुपलक्षितः यः असंस्कृतलौकिकदेशः स यूपमानाङ्गत्वेन विधीयते । "विषं भुंक्ष्व माचास्य गृहे भुंङ्थाः" इत्यत्र विषं भुंक्ष्वेति वाक्यस्य परगृहभक्षणनिषेध एव लक्षणा । तस्मात् वाक्यलक्षणा बहुलोदाहरणा । एवमत्रापि प्रकृतिप्रत्ययसमुदाये एकयैव लक्षणया भाव्यम्, शक्यसम्बन्धाभावश्च न शङ्कनीयः । पदसमुदायो वाक्यम् । समुदायस्य शक्याभावेऽपि समुदायिनः पदस्य यत् शक्यं तत्सम्बन्धादेव लक्षणोपपद्यते; सा चाजहल्लक्षणा । अजहल्लक्षणास्थले एकरूपेण एकत्रान्वयाभावः स्यात् स चात्र न घटते इति न वाच्यम् । छत्रिणो गच्छन्तीत्यत्र छत्रित्वेनाच्छत्रित्वेन च गमनक्रियान्वयदर्शनात् । 15. गमनकर्तृत्वमेवात्र अवच्छेदकमिति च न वाच्यम्, गन्तारो गच्छन्तीति वाक्यात् छत्रिणो गच्छन्तीति वाक्यस्य भेदाभावप्रसङ्गात् । किं च पदार्थतावच्छेदकप्रकारता शाब्दधियमवश्यमन्वेति, यथा घटत्वनिष्ठपदार्थतावच्छेदकता प्रकारीभूय

घटे वर्तते, तथा छत्रित्वनिष्ठपदार्थतावच्छेदकता प्रकारीभूय छत्रिणि वर्तते । छत्रिणो गच्छन्तीत्यत्र यदि गन्तृत्वमवच्छेदकं तर्हि छत्रित्वरूप-मुख्यार्थः लक्ष्यार्थः भवेत् । तच्च न घटते । यदि मुख्यार्थः लक्ष्यो भवति तर्हि मुख्यार्थसम्बन्धकल्पनायै अन्यो मुख्यार्थः कल्पनीयो भवति । अपि च जहल्लक्षणातः भेदाभावप्रसङ्गः । इदमुक्तं भवति जिज्ञासेत्यत्र प्रकृति-प्रत्ययसमुदायेन अजहल्लक्षणया विचारो लक्ष्यते । समुदाये वाक्ये एकैव अजहल्लक्षणा । अजहल्लक्षणास्थले सर्वत्र छत्रिणो गच्छन्ति इत्यत्रेव एक-रूपेणान्वयो न स्यात्, किन्तु भिन्नरूपेण छत्रित्वेनाच्छत्रित्वेन च । अतएव इत्यादिना तस्य प्रपञ्चः क्रियते । एकवृत्त्युपस्थापितानां परस्परमन्वयाभावः इति नियमः पूर्वपक्षिकण्ठे गडुः सञ्जातः । तदर्थं च अजहल्लक्षणास्थले सर्वत्रवृत्तिद्वयाङ्गीकारपर्यन्तमनुधावति--भिन्नवृत्त्युपस्थापितयोः छत्रित्वा-च्छत्रित्वयोरन्वयः सम्भाव्यते यथा, तथा ज्ञाधातोः शक्त्या ज्ञानम्, सन्-प्रत्ययस्य विचारश्च लक्षणया, परस्परमन्वितः इति पूर्वपक्षिणः आकूतम् ।

अत्र विदांकुर्वन्तु विद्वांसः यत् काकत्वं यद्यपि वाच्यं तथापि दध्युप-घातुकेष्वन्यतमत्वात् काकस्य, तत्राभेदसम्बन्धेनान्यतमत्वात् समन्वयो युक्तः; अच्छत्रित्वस्य लक्ष्यार्थस्य छत्रित्वस्य वाच्यार्थस्य चान्वयो युज्यते गन्तृत्वेन तयोरभिन्नत्वात् । एवमभेदसम्बन्धेनान्वये सत्यजहल्लक्षणा वर्तते । किन्तु ज्ञानविचारयोरभेदसम्बन्धो न युज्यते, विचारस्य साधनत्वात् ज्ञानस्य, च साध्यत्वात् । साध्यसाधकभावश्च सम्बन्धः ज्ञानविचारौ पृथक्करोति, येन हेतुना विवरणमते प्रकृतावजहल्लक्षणा अवश्यम्भाविनी, प्रत्यये जहल्लक्षणया साकम् ।

16. अस्तु । पूर्वपक्षिणो मतमेव पुनरप्यग्रे पश्यामः । "सकृदुच्चरितः शब्दः सकृदर्थं गमयति" इति न्यायात् जिज्ञासेति सकृदुच्चारिते सति अजह-ल्लक्षणायां च सत्यां, ज्ञाधातोः वाच्यार्थज्ञानम्, अजहल्लक्षणया च विचारः सपदि समुपस्थातुं न शक्नुवतः इत्याशंक्यते वृत्तिद्वयस्य स्वयंस्वीकृतत्वात् अजहल्लक्षणायाम् । समाधीयते च पूर्वपक्षिणा गङ्गायां घोषमत्स्यौ इत्यादि-प्रयोगेषु गङ्गायां घोषः लक्षणया, मत्स्यस्तु वाच्यवृत्त्या सकृदुच्चारेणापि

व्यक्तीभवतः। तथैव जिज्ञासेत्यत्रापि सकृदुच्चारणेन अजहल्लक्षणागत-वाच्यवृत्त्या ज्ञानम्, लक्षणया विचारश्च व्यक्तीभवतः इति। शब्दबुद्धिकर्मणां विरम्य व्यापाराभावः इति न्यायात् वाच्यवृत्त्युपस्थापनानन्तरं विरम्य, पुनः लक्ष्यवृत्तिस्वीकारे विलम्बात् जिज्ञासेत्यत्र प्रकृतिप्रत्ययसमुदाये वृत्तिद्वयस्य सत्वेऽपि अर्थावगमो न स्यादिति स्वयमाशंक्य समाधत्ते पूर्वपक्षी—तात्पर्य-पर्यवसानस्यैव भेदकत्वादिति। विरम्यव्यापारस्य तात्पर्यपर्यवसानपर्यन्तत्व-मर्थः। तथा सति जिज्ञासापदे विचारान्वयात् पूर्वं शब्दव्यापारस्याविरतत्वात् तादृक्क्लेशो न स्यात्। तस्मात् समुदाये अजहल्लक्षणायां न किञ्चित् बाधकम्। समुदायस्य अजहल्लक्षणा यदेष्यते तदा वाच्यवृत्त्युपस्थितस्य ज्ञानस्य लक्ष्ये विचारे अन्वयो भवति इति पूर्वपक्षी स्वमतं स्थापयति।

एवं स्थिते विचारस्य अजहल्लक्षणयोपस्थितौ स्वरसता नास्तीति प्रकारान्तरमाश्रयति पूर्वपक्षी वस्तुतस्तु इत्यादिना :– जिज्ञासापदं तन्त्रेणो-पादीयते हलन्त्यमिति पाणिनिसूत्रमिव। तन्त्रं नाम नानाफलकसमानाकार-कानेकव्यापाराणां मध्ये एकव्यापारेण फलोत्पादनम् अथवा सकृदुच्चरितेन शब्देन अभीष्टनानार्थसम्पादनम्। अत्र हलन्त्यमित्यस्यैव तन्त्रावृत्तिः क्रियते। एकेन जिज्ञासापदेन विचारो लक्ष्यते जहल्लक्षणया, द्वितीयेन जिज्ञासापदेनेष्यमाणज्ञानमभिधया बोध्यते। ज्ञाधातोः वाच्यार्थः ज्ञानम्, तत् परित्यज्याजहल्लक्षणायां साध्यावस्थस्य तस्यैव पुनरुपादानं 17. न युज्यते। किं च प्रत्ययलक्षणा न क्वापि दृष्टपूर्वा। अपि च ज्ञानस्य साध्यत्वं लक्ष्यमिति कुतः उच्यते? साध्यं यदि न स्यात् तर्हि ज्ञानस्य फलत्वं न सिद्ध्येत्। यदि फलत्वोपपत्तये लक्षणेष्यते, तर्हि वास्तविकं फलं मोक्षोऽपि लक्ष्येत। मोक्षसाधनत्वेनैव खलु ज्ञानस्य फलत्वम्। तच्च न लक्षयितुं शक्यते (मोक्षाख्यं फलम्) मोक्षसाधनस्य अर्थसिद्धत्वात्। प्रकृत्य-र्थान्वितस्वार्थाभिधाननियमात् प्रत्ययानाम्। जिज्ञासापदेनेति ग्रन्थविरो-धाच्च। ज्ञाधातोः ज्ञान एव शक्तिः, जिज्ञासापदस्य च ज्ञानसम्बद्धविचारे। जहल्लक्षणा इत्येवं प्रकारेणैकलक्षणयैवोपपत्तौ, साध्यत्वपर्यन्तानुधावनं व्यर्थम्, वस्तुतस्साध्यस्य मोक्षस्य च अशब्दार्थत्वात् ज्ञानस्य साध्यत्वाय च

अजहल्लक्षणापि नापेक्ष्या जिज्ञासापदेन विचारो लक्ष्यते इति स्वोक्तिविरोधात् । जिज्ञासा इति पदसमुदायेन जहल्लक्षणया विचारो लक्ष्यते प्रकृत्या ज्ञानमिष्यतेऽभिधया—इति पूर्वपक्षस्य सङ्कलित आशयः ।

अत्राहुः इत्यादिना पूर्वपक्षं निराकृत्य सिद्धान्ताध्वा प्रदर्श्यते विवरणमतानुरोधेन :—

आदौ प्रकृतिप्रत्ययसमुदाये एकैव लक्षणा इत्युक्तं तत् निराक्रियते । अस्मात् पदादयमर्थो बोद्धव्यः इतीश्वरेच्छा सकेतः । सङ्केतार्थगोचरः शब्दव्यापारः अभिधा । शक्यसम्बन्धः अथवा रूढितः प्रयोजनाद्वा शक्यतावच्छेदकारोपो लक्षणा । एवं स्थिते, सम्पूर्णवाक्ये शक्तिकल्पने गौरवं भवति । गङ्गायां घोष इत्यादौ शक्यसम्बन्धात् अर्थात् लक्षणातः उपस्थिते तीरे, तात्पर्यवशात् लक्ष्यत्वमङ्गीक्रियते । तथा च शक्यं यदा भिन्नं, तदा तत्सम्बद्धानां लक्षणानामपि भेदः अवश्यम्भावी । शक्तिश्च पदस्यैव न तु वाक्यस्य । "वायुर्वै क्षेपिष्ठा देवता" इत्याद्यर्थवादस्थलेऽपि वाक्यार्थद्वारा प्राशस्त्यादि लक्षकत्वं पदानामेव प्रत्येकम् । तस्मात् लक्षणावृत्तिः द्वित्वत्रित्वादिरिव वाक्यव्यापी व्यासज्यवृत्तिधर्मो न भवति । पदानां तदर्थानां तत्सम्बन्धानां च नानात्वेन एकत्वासम्भवः । अर्धमन्तर्वेदि मिनोति इत्यादौ वाक्यार्थद्वारा वस्त्वन्तरं 18. पदैः लक्ष्यते सैव वाक्यलक्षणा । एवं स्थिते समुदायिशक्यसम्बन्धादेव समुदाये एका लक्षणेति वादो न घटते । समुदायिनांभेदेन तच्छक्यसम्बन्धस्यापि भेदात् । एकैकस्मिन् पदे एकैका लक्षणास्ति तथापि सर्वासां तासां एकप्रतीतिजनकत्वेनैकत्वं यदीष्यते तर्हि ओमिति ब्रूमः । तथा सति एकलक्षणाव्यवहारेणैव विचारोपस्थितौ लक्षणाद्वयव्यवहारः अनावश्यकः अभविष्यत् । यद्यपि व्यवहारे पूर्वपक्षरीत्या वाक्ये एका लक्षणा, तथापि प्रकृतौ कृतायाः द्वितीयलक्षणायाः अनिवार्योपस्थितिः अङ्गीकृता एकलक्षणाव्यवहारं भञ्जयेत् । अर्थात् पूर्वपक्षिण आशय एकप्रतीतिजनकत्वमेकत्वं स्यात् । अस्ति लक्षणाद्वयस्यावश्यकता सिद्धान्ते । लक्षणाद्वयस्य सम्भवेऽपि एककार्यपरत्वात् एकैव लक्षणेति चेदुच्यते इष्टापत्तिरेव । वाक्ये तावत् नैका लक्षणा भवति । अनेकलक्षणासु सतीष्वपि

एकलक्षणाव्याहारो यदि स्यात् तर्हि लक्षणाद्वयाङ्गीकारवैयर्थ्यापत्तिः। लक्षणाद्वयं चावश्यकमेवेति स्थिरीकृतत्वात् एकप्रतीतिजनकत्वेन वाक्ये एकलक्षणाव्याहारः व्यर्थो भवतीति यावत्।

यत्तु छत्रिणो गच्छन्तीत्यत्र अजहल्लक्षणास्थले छत्रित्वेनैवान्वयः इत्युक्तम् तदपि न विचारसहम्। तथाहि :— छत्रिणोगच्छन्तीत्यस्य छत्र्यच्छत्रिसमुदायो गच्छतीत्यर्थः। "प्राणभृत उपदधाति सृष्टीरुपदधाति इत्यादिषु समुदायस्य लक्ष्यत्वमभिमतम्।" तद्वानासामुपधानो मन्त्रः इतीष्टकासु लुक्चमतोः, वर्चस्वानुपधानो मन्त्रः आसामिष्टकानां वर्चस्याः। वर्चश्शब्दो यस्मिन् मन्त्रेऽस्ति स वर्चस्वान् कुम्भेष्टकोपधानमन्त्रः, "भूतं च स्थ भव्यं च स्थ देवस्य वः सवितुः प्रसवे" इत्यादिकः। उपधीयते अनेनेत्युपधानम् चयनं रचनमित्यर्थः। ऋतुमानुपधानो मन्त्रः आसामिष्टकानामृतव्याः" इति वैयाकरणसिद्धान्तकौमुद्याः तत्त्वबोधिनीव्याख्यायाम्। एकस्यैव मन्त्रस्य प्राणभृत्त्वेऽपि छत्रिणो गच्छन्तीतिवत् तत्सहचरिताः सर्वे मन्त्राः प्राणभृच्छब्देन लक्ष्यन्ते। 19. तथैव छत्रिणो गच्छन्तीत्यत्रापि छत्र्यच्छत्रिसमुदायो गच्छतीत्यर्थः। यदि समुदाये एव लक्षणा, तर्हि गच्छन्तीति बहुवचनस्य समुदाये एकवचने कथमन्वयः इति शङ्का समाधीयते। :—गङ्गायां घोषमत्स्यौ इत्यत्र लक्षणया शक्त्याचार्थद्वयेऽपि सकृदुच्चरित एव गङ्गाशब्दः एकवचनान्तः पर्याप्तो भवति। "अदितिः पाशान्" इत्यत्रेव अवयवबहुत्वेन वा सार्थकत्वात् :— प्रकृतिवत् विकृतिः कर्तव्या इत्यतिदेशशास्त्रेण प्रकृतिगतौ अदितिः पाशं प्रमुमोक्तु, अदितिः पाशान् प्रमुमोक्तु इत्युभौ मन्त्रौ द्विपशुके यागे प्राप्तौ। (प्रकृतिः :— अग्नीषोमीयः, विकृति :— द्विपशुकः मित्रावरुणदेवताको यागः "मैत्रग् श्वेतमालभेत वारुणं कृष्णमपां चौषधीनां च सन्धावन्नकामः" इति मन्त्रेण विहितः) तयोरुभयोः द्विपशुकयागे सङ्गतार्थकत्वसम्पादनाय ऊहः कार्यं इति सिद्धान्तः। तत्रैकवचनान्तपदोपेतस्य अदितिः पाशमिति मन्त्रस्य प्रकृतौ सङ्गतार्थकत्वसम्पादनाय पाशावित्यूहः कर्तव्यो भवति। तथा पाशानिति बहुवचनान्तपदोपेतमन्त्रस्य (पाशान् प्रमुमोक्तु इत्याकारकस्य) प्रकृतौ सङ्गतार्थकत्वाभावेन विकृतौ प्राप्तस्यापि तस्योहो न कार्यः। (प्रकृतौ सङ्गतार्थस्यैव मन्त्रस्य विकृतौ प्राप्तस्योहः

कार्यः नान्यस्येति नियमात्) इति पूर्वः पक्षः। तत्रोच्यते। पाशान् प्रमुमोक्तु इति बहुवचनान्तपदोपेतोपि मन्त्रःएकपशुके अग्नीषोमीये प्रकृतियागे सङ्गतार्थक एव। तत्रत्यबहुवचनस्यावयवलक्षकत्वात्। अतः अवयवलक्षणया बहुवचनान्तपदोपेतो मन्त्रोऽपि एकपशुके अग्नीषोमीये प्रकृतियागे सङ्गतार्थक एव। तत्रत्यबहुवचनस्यावयवलक्षकत्वात्। अतः अवयवलक्षणया बहुवचनान्तपदोपेतो मन्त्रोऽपि प्रकृतौ समवेतार्थक एव भवति। अतः एकवचनपदोपेतमन्त्रस्य यथा विकृतौ, पाशौ इति ऊहः कर्तव्यो भवति तथा पाशानिति बहुवचनपदोपेतमन्त्रस्थस्य पाशानिति पदस्यापि पाशाविति द्विवचनान्तत्वेनोहः कर्तव्यो भवति। एवमत्रापीति न काचित् विप्रतिपत्तिः। समुदायसमुदायिनोः अभेदसम्बन्धो भवत्येव। छत्रिणश्च 20. समुदाये अन्वयन्ति। तस्मात् छत्र्यच्छत्रिसमुदाये लक्षणा। समुदाये इत्येकवचने छत्रिणः इति बहुवचनं कथमन्वियात् इति शङ्का न कार्या। प्रयोगप्रत्यययोः वैचित्र्यं सर्वसम्प्रतिपन्नम्। बहून् विदुष उद्दिश्य हे विद्वद्वृन्द इति सम्बुद्धिः युज्यत एव। ततः शक्यतावच्छेदकभिन्नधर्मेण समुदायत्वेन अन्वयः अलं भवति लक्षणास्वीकृतये। तस्मात् पूर्वपक्षोक्तमजहल्लक्षणास्थले शक्यतावच्छेदकेनैवान्वयः इति यत्, तत् परास्तम्। न च जहल्लक्षणातो भेदाभावप्रसङ्गः पूर्वपक्षोक्तरीत्या। काकेभ्यो दधिरक्ष्यतामित्यत्र दध्युपघातुकाकारेण काकानां प्रवेशः अस्त्येव, काकत्वाकारेण मा भूत् तथापि काकशब्दवाच्यार्थः (दध्युपघातुकत्वाकारेण) क्रियान्वयी स्यात् यदि तावतालमजहल्लक्षणास्वीकाराय कारणं भवति; काकेभ्यो दधि रक्ष्यतामित्यत्र दध्युपघातुकत्वप्रकारबोधश्चान्यथोपपादयितुं न शक्यते। उक्तमर्थं द्रढयति वस्तुतस्तु इत्यादिना :– छत्रिणो गच्छन्तीत्यादौ शक्यस्य छत्रित्वस्य लक्ष्यस्य अच्छत्रित्वस्य चाजहल्लक्षणया बोधः अवश्यम्भावी। कल्पतरौ "ऋतं पिबन्तौ" इत्यत्र पिबदपिबत्समुदाये लक्षणा प्रोक्ता। कल्पतरुव्याख्यापंक्तयश्च सृष्टीरुपदधातीति सन्दर्भे इत्थमाकाराः वर्तन्ते :– "लक्षणया पिबदपिबतोः पिबन्ताविति निर्देशोपपत्तेः, पूर्वपक्षसिद्धान्तपक्षाक्षेपे च वाक्यस्य निर्विषयत्वप्रसङ्गात् आक्षेपायोगमाशंक्याह औत्सर्गिकस्येति

अयं हि आक्षेप्ता पिबन्ताविरत्यस्य मुख्यमर्थं औत्सर्गिकमबाध्यं मन्यते, प्राकृतसुपर्णविषयत्वं च वाक्यस्य पक्षान्तरं कल्पयिष्यते इति मन्यते अत आक्षेप इत्यर्थः। लक्षणां वक्तुं मुख्यार्थयोगमाह – अध्यात्मेत्यादिना। सृष्टीरुपदधातीति समाम्नाय "एकया स्तुवत प्रजा अधीयन्त प्रजापतिरधिपतिरासीत् तिसृभिरस्तुवत ब्रह्मा सृजते"त्यादयः सृष्टयसृष्टिमन्त्रा आम्नाताः तत्र सृष्टीरुपदधातीति यदि सृष्टिमन्त्रकेष्टकानामुपधाने विधानम्, तर्हीष्टकामु सृष्टयसृष्टिमन्त्रकत्वविशेषस्याद्याप्यनवगमात् सर्वा एव सृष्टिमन्त्रकाः, तत्र सृष्टिपदरहितमन्त्राणाम् आनर्थक्यं स्यात्। तन्मा भूदिति सृष्टिशब्दः सृष्टयसृष्टिसमुदायं लक्षयित्वा 2। तत्समुदायिनः सर्वान् मन्त्रान् लक्षयति। एवमत्रापि पिबच्छब्दः स्वार्थस्यापिबत्संसृष्टतां पिबदपिबत्समुदायमिति यावन्तं लक्षयन् स्वार्थं पिबन्तमजहदितरेतरयोगलक्षणं समुदायं प्रति समुदायीभूतपिबदपिबतपरो भवति, न पिबत्येव वर्तते, नापि लक्षयन् गङ्गाशब्दवत् स्वार्थं त्यजेदित्यर्थः"। "अपि च लिङ्गसमवायाधिकरणे उपधानयोगितया स्वार्थस्य लक्ष्यत्वे स्वार्थोऽपि अन्तर्भूतः इति न वृत्तिद्वयविरोधः इत्युक्तं नयविवेके" इति; व्याख्यातं च वरदराजेन 'उपधानयोगितया गणस्य लक्ष्यत्वे" इति। अत्र मिताक्षता विव्रियते :– भवनाथमिश्रस्य प्रभाकरमतानुगस्य नयविवेको नाम ग्रन्थः वरदराजकृतदीपिकाख्यव्याख्यासहितो लभ्यते। तत्र प्रथमाध्याये उक्तमुद्ध्रियते :– "प्राणभृन्मन्त्रवतीनां उपधानविधिः अर्थवत्वाय पूर्ववत् दुर्घटः इत्यनुवादः अत्रापिदुर्घटः इति शङ्कापनोदाय, सकृदुच्चरितसृष्टिप्राणभृत्पदयोः लक्ष्यपरत्वं वृत्तिद्वयाधीनमयुक्तमिति शङ्का। प्राणभृल्लिङ्गका चैका तत्पदनिर्देश्या बह्व्यो न युक्ता इत्यभ्युच्चयः, तन्न; उपधानयोगितया लक्ष्यत्वे स्वार्थोऽप्यन्तर्भूतः इति न वृत्तिद्वयम्" इति। गमनिका -- स्वार्थोऽप्यन्तर्भूत इति न वृत्तिद्वयविरोधः इत्युद्धारः कृतः तत्रभवता अन्नम्भट्टेन, यः नयविवेकमूलग्रन्थे न दृष्टः। "विरोध" इति स्थाने "वृत्तिद्वयम्" इत्येव लक्ष्यते। एतच्चिन्त्यम्। वरदराजव्याख्या चेदृशी :– "प्राणभृत उपदधातीत्यत्रापि पूर्ववदेव पूर्वोत्तरपक्षावित्याह -- योगान्तरंत्विति। कथमनुवादस्य दुर्घटत्वमित्याशंक्याह — सकृदिति। अत्र हि सृष्टिरित्यादावनुवादाक्षेपः, सकृदु-

च्चारितयोः सृष्टिप्राणभृत्पदयोः लक्ष्यलक्षणपरत्वायोगात् । न हि गङ्गायां घोष इत्यत्र गङ्गापदं लक्षणापरम् न च वृत्त्यन्तरात् लक्ष्यपरता, सकृदुच्चारितस्य वृत्तिद्वयायोगादित्यर्थः। प्राणभृत्ययं परो विशेष इत्याह-प्राणभृदिति शङ्कामपनुदति तन्नेति। स्यादेवं यदि सकृदुच्चारितस्य वृत्तिद्वयापत्तिः इह तूपधानयोगितया गणस्य लक्ष्यत्वे स्वार्थेऽपि लक्षणेति न सकृदुच्चारितस्य वृत्तिद्वयापत्तिरित्यर्थः । ननु बह्वीनामेकप्राणभृत्पदलक्ष्यत्वमयुक्तमित्यत्राह – उपधानेति । अत एव दण्डिनो गच्छन्तीति । 22, गन्तृतया दण्डचदण्डिलक्षणा लोकेऽपि इत्याह -– दण्डिनः इति" । एवञ्च न वृत्तिद्वयम् किन्तु समुदाये लक्षणेति स्पष्टीकृतम् ।

"न च सकृदुच्चरितस्य वृत्तिद्वयमव्युत्पन्नम् गङ्गायां घोषमत्स्यौ इत्यत्र दृष्टत्वात्" इति पूर्वपक्षवचनमाहृत्य निराक्रियते :— गङ्गायां घोषमत्स्यावित्युदाहरणमालम्ब्य अनुकरणेच्छया जिज्ञासेत्यत्र प्रकृतिप्रत्यययोरपि सकृदुच्चारणेनैव वृत्तिद्वयनिर्वाहः इत्युच्यते चेत्, न काचिद्धानिः । किन्तु तावन्मात्रेण प्रकृतिभूते ज्ञाधातौ अजहल्लक्षणां निवार्य समुदाये अजहल्लक्षणास्वीकारः कर्तुमिष्टः सन्नपि विफल एव स्यात् । प्रकृतिप्रत्ययसमुदाये एकैवाजहल्लक्षणेति वदतां, प्रकृतेः ज्ञाधातोः ज्ञानञ्च वाच्यवृत्त्या ब्रुवतां पूर्वपक्षिणामाशयः अनूद्य खण्ड्यते न चैतावता इत्यादिना । सकृदुच्चारणमात्रेण वृत्तिद्वयव्यापारस्य सम्भवेऽपि प्रकृतिभूतज्ञाधातुः अजहल्लक्षणां विना शक्याशक्यसमुदायमभिव्यक्तुं न शक्नोति । उक्तस्थले = ज्ञाधातौ लक्षणया = अजहल्लक्षणया, शक्यस्य = ज्ञानसामान्यस्य अशक्यस्य = लक्ष्यस्य साध्यज्ञानस्य चोपस्थितिः वारयितुमशक्या = अनिवार्या । ऋतं पिबन्तावित्यत्र पिबच्छब्देन यथा अपिबन्नपि लक्षणया गृहीतस्तथा ज्ञाधातुना साध्यज्ञानमजहल्लक्षणयैव बोद्धव्यमिति हेतोः अजहल्लक्षणा निरासाय कृतो यत्नः विफल एव ।

किं च प्रकृतिप्रत्ययसमुदाये अजहल्लक्षणया विचारज्ञाने उपतिष्ठेते । एकवृत्त्युपस्थितयोः एकमुद्दिश्यापरं विधातुं न युज्यते वाक्यभेदभयात् । एकेनैव वाक्येनोद्देश्यं विधेयं च प्रतिपादयितुं न शक्यते । ज्ञानाय विचारः

कर्तव्यः इत्यन्वयश्च विवरणेन दर्शितः। वषट्कर्तुः प्रथमभक्षः इतिसोम-यागप्रकरणे श्रूयते। वषट्कर्ता नाम होता। तत्र होतृचमसगतस्य सोमरसस्य भक्षणं होतुः समाख्यया प्राप्तम्। तद्भक्षणमनूद्य प्रथमभक्ष इतिपदेन प्राथम्य विधीयते अप्राप्तत्वात् प्राथम्यस्य। तत्र प्रथमभक्षः इत्येतत् एकमेव समस्तम् पदम्। 23. अस्मात् पदात् एकया वृत्त्योपस्थितयोः प्राथम्य-भक्षणयोः एकस्योद्देश्यत्वमन्यस्य तदुद्देश्येन विधेयत्वमिति कल्पनमनुचितम् (यो भक्षः सप्रथमः इति विच्छिद्य अन्वेतुमयोग्यत्वात्) अतः प्राथम्यविशिष्टं भक्षणमेवात्र विधीयते इति निश्चितम्। तत्र च भक्षणे वषट्कारः यः अस्ति स कारणं भवति। अत्रैकवृत्त्युपस्थितयोः प्राथम्यभक्षणयोः विधेयत्व-मुद्देश्यत्वं च यथा न घटेते तथा समुदाये अजहल्लक्षणया प्राप्तयोः ज्ञान-विचारयोः उद्देश्यविधेयभावो न घटेत।

ननु ज्ञाधातोः वाच्यवृत्तिरङ्गीकृतैवेति वृत्तिद्वयमेवाङ्गीक्रियते चेत्-समुदाये अजहल्लक्षणाक्तिः भज्यते। गङ्गायां घोषमत्स्यावित्यत्र चाजह-ल्लक्षणा नास्त्येवेति वृत्तिद्वयस्थले सकृदुच्चारनिर्वाहोऽपि विफल एव। यथा कथञ्चित् भवतु। प्रकृते नैकलक्षणया निर्वाहः इत्यमुमर्थं विशदयति तथाहीत्यादिना :– ज्ञानं यदि साध्यं न स्यात् तर्हि प्रत्यये तस्य अन्वयो न स्यात्। सन्प्रत्ययस्येच्छार्थकस्य विषयत्वमेव साध्यत्वमिति न वक्तव्यम्। इच्छाया अभावेऽपि, अवश्यम्भावितया कायकष्टं कुर्वतां दुःखमपि साध्यं भवति। विधुरस्यातीतभार्यायामिच्छा वर्तते, इच्छाविषयपत्नी तु साध्या न भवति। तस्मात् "यत्सत्वे यत्सत्वं यदभावे यदभाव." इत्यन्वयव्यति-रेकादर्शनात् यद्यदिष्टं तत्साध्यमित्यनुमानं न सम्भवति। तथाचेच्छाविष-यत्वमात्रं साध्यत्वमिति मास्तु कथनम्। तुष्यदुर्जनन्यायेन इष्टसाध्ययोः अनुमानमङ्गीकृत्यापि निरस्यते पूर्वपक्षः वृत्त्युपस्थापितस्यैवेत्यादिना :– वृत्त्यैवोपस्थापितस्य साध्यत्वस्यान्वयबोधविषयत्वनियमेन अनुमितिसिद्धं साध्यं ज्ञानं अजहल्लक्षणया लक्ष्यते। अन्यथा विचारेऽपि लक्षणा न प्रवर्तेत अनुमानेन गतार्थस्य तस्यान्वयधीविषयत्वासम्भवात्।

24. किञ्च सन्प्रत्ययस्य विशेषणत्वेनोपस्थितस्य ज्ञानस्य स्वतन्त्रतयो-

द्गम एव नास्ति, साध्यतया कुतः ? गौः नित्या इत्यत्र गोत्वजातिः व्यक्तेः विशेषणं भवति ।

जातिविशिष्टव्यक्तेः सर्वत्रग्रहणात् ।

तस्मात् प्रकृत्या ज्ञाधातुना साध्यावस्थं ज्ञानं लक्षणीयमेवेति लक्षणाद्वयस्यावश्यकत्वात् सन् प्रत्ययस्यैव विचारे लक्षणा इत्येवंप्रकारेण लक्षणाद्वयाङ्गीकारः अवश्यम्भावी । एवं प्रकृतिप्रत्ययसमुदाये एका लक्षणा अजहल्लक्षणेति वदन्तः निरस्ताः ।

तन्त्रकल्पनयापि न किमपि साध्यते ।

एकेन जिज्ञासापदेन विचारे जहल्लक्षणा, अन्येन पदेन साध्यावस्थज्ञाने अजहल्लक्षणा चेति पदद्वयेऽपि लक्षणाङ्गीकारस्यानिवार्यत्वात् तदपेक्षयैकस्मिन् श्रुतपदे प्रकृतिप्रत्ययलक्षणाद्वयकल्पनैव लघुतरा । प्रकृतिप्रत्ययसमुदाये जहल्लक्षणापि नोचिता युक्त्या पूर्वोक्तया । गोशब्दस्य जातिविशिष्टव्यक्तिरर्थः, केवलं गोत्वस्याभिव्यक्तये लक्षणावश्यमेषितव्या । तथैव ज्ञाधातोः वाच्यार्थः ज्ञानम्, लक्ष्यार्थेन चावश्यमतो भाव्यं साध्यज्ञानेन । प्रकृत्या साध्यावस्थं ज्ञानं लक्षणीयमवश्यमिति हेतोः तन्त्रकल्पनायां पदद्वये एकैकस्मिन् एकैका लक्षणेति वक्तव्यम् । तदपेक्षयैकस्मिन् श्रुतपदे सन्प्रत्ययस्य लक्ष्यार्थः विचार इति ज्ञाधातोः लक्ष्यार्थः साध्यावस्थं ज्ञानमित्येव रमणीयम् ।

प्रत्ययस्य लक्षकत्वं च नादृष्टचरम् । तथाहि :-- "सक्तुभिः जुहोति" इति वक्तव्ये सक्तून् जुहोति इत्युक्तम् । सक्तूनिति द्वितीयाविभक्तिप्रत्ययस्य करणत्वे लक्षणा । "प्रयाजशेषेण हवींष्यभिघारयति" इत्यत्र तृतीयायाः कर्मत्वे लक्षणा, हवींषि इति द्वितीयायाः आधारत्वे लक्षणा बहुत्र भवति । आख्यातस्य कृत्यर्थत्ववादिनां नैयायिकानां मते रथो गच्छतीत्यादौ व्यापारः प्रत्ययेनैव लक्ष्यते । फलानुकूलव्यापारार्थत्ववादिनां वैयाकरणानां 25. भाट्टानां च मते जानाति इच्छति द्वेष्टि यतते इत्यादौ ज्ञानाश्रयत्वमिच्छाश्रयत्वं द्वेषाश्रयत्वं च सर्वं लक्षणया । नश्यतीत्यत्र नाशप्रतियोगित्वमपि

लक्षणयैव । एवं च गुहाधिकरणे शतृप्रत्ययस्य कारकत्वमपि लक्षणयैवाभीष्टं कल्पतरौ । सन्प्रत्ययस्य लक्षकत्वं न दृष्टमिति च न वक्तव्यम् । "धातोः कर्मणः समानकर्तृकादिच्छायां वा" इति सूत्रे उपमानाद्वा सिद्धमिति वार्तिकेन इच्छासदृशे व्यापारे गौणः प्रयोगः इति भाष्ये प्रपञ्चितम् । कैयटोऽपि गौणमुख्ययोः मुख्ये कार्यसम्प्रत्ययः इति न्यायस्य क्वचिल्लक्ष्यापेक्षया नाङ्गीकारं वहति । अश्मा लुलुठिषते, कूलं पिपतिषतीत्यादौ सन्प्रत्यये लक्षणा स्यात् यत्राचेतने चेतनधर्मस्यारोपः महाभाष्यानुसारेण । ईक्षत्यधिकरणे "कूलं पिपतिषतीत्यचेतनेऽपि कूले चेतनवदुपचारो दृष्टः तद्वदचेतनेऽपि प्रधाने प्रत्यासन्नसर्गे चेतनवदुपचारो भविष्यति 'तदैक्षत' "इति" भगवत्पादैरप्युक्तम् । ततो न प्रत्यवायः प्रत्यये लक्षणायाम् ।

वान्तभोजनन्यायप्रसङ्गः इति यदुक्तं तत् समाधीयते । ज्ञाधातोः शक्यं ज्ञानं परित्यज्य तदेव ज्ञानमजहल्लक्षणया विवक्षन्ते इति यदुक्तं तत्रोच्यते :— समुदायेऽजहल्लक्षणावादिनां पूर्वपक्षे, शक्यं ज्ञानं परित्यज्य तदेव लक्षणया लक्ष्यते इत्युक्तं न साम्प्रतम् । साध्यत्वं ज्ञानस्य नास्माभिः परित्यक्तम् लक्षणया तु गृहीतम् । ततः त्यक्तपुनस्स्वीकारप्रसङ्गो नास्ति । सम्प्रत्ययस्य विचारलक्षकत्वात् तेन साध्यता न बोध्यते । तस्मात् वान्तभोजनन्यायोऽत्र न प्रसज्यते । अजहल्लक्षणायां साध्वत्वस्यापरित्यागात् इति ।

"मोक्षसाधनस्यैव फलत्वमिति तदन्तोऽपि लक्ष्येत" इति पूर्वपक्षोक्तं समाधीयते :— ज्ञानं यदि साध्यत्वेनोपतिष्ठते तदुद्दिश्य साधनं विचारो विधीयते । विचारं साधनं विधातुं ज्ञानस्य साध्यत्वमावश्यकमिति तावन्मात्रं लक्षणीयम् । तस्मिंश्च सिद्धे, ज्ञानं च न निष्फलमिति मोक्षसाधनत्वं तस्यार्थिकांशे निपतति । पूर्वपक्षे तु इच्छाविषयत्वमात्रं ज्ञानस्य यदा प्रोक्तं, तेन 26. मोक्षसाधनब्रह्मज्ञानेन भाव्यमित्याशङ्कायाः समाधानं न सम्भाव्यते । आचार्यश्च मोक्षसाधनमार्थिकं कथयाञ्चक्रुरिति च हेतोः प्रत्ययेन विचारो लक्षितः । यत्र शब्दानामन्वयः पर्यवस्यति तत्र तावन्मात्रं लक्ष्यते । पुरुषप्रवृत्तिसिद्धिपर्यन्तं विधिः प्रवर्तते । निष्फले च पुरुषो न प्रवर्तते इति ज्ञानस्य मोक्षसाधनत्वमार्थिकम् । उक्तदूषणमेतत्

पूर्वपक्षिणामेव दुरुद्धरम् । तथा हि :-- इच्छा विषयं ज्ञानं न ज्ञानसामान्यं भवति, मोक्षसाधनब्रह्मज्ञानमेवेष्यते इति तस्यार्थिकत्वकथनमनुचितमापद्यते। आर्थिकांशे परित्यक्तस्य मोक्षसाधनज्ञानस्य विषयत्वेन ग्रहणात् दूषणं पूर्वपक्षे सुस्थमिति । उत्तरपक्षे तु मोक्षसाधनब्रह्मज्ञानं लक्षणागम्यमिति नानुपपत्तिः । मोक्षसाधनज्ञानस्यार्थिकत्वे प्रकृत्या प्रत्ययेन वा अभिनयव्यक्तत्वेऽपि, लक्षितविचारस्य साधनस्य प्रकृत्यर्थभूते साध्यज्ञानेऽन्वयः, साध्यविषयमुद्दिश्य इच्छा प्रवर्तते, इच्छाफलभूतविचारश्च लक्ष्यते इति सुस्थम् ।

प्रकृतौ लक्षणा, प्रत्यये लक्षणा इत्यभिहितत्वात् सिद्धान्ते, "जिज्ञासापदेनेति ग्रन्थविरोधाच्च" इति पूर्वपक्षोक्तं विरोधित्वं परिह्रियते :-- प्रकृतिप्रत्यययोः अलक्षकत्वेऽपि सकलस्य पदस्य लक्षकत्वात् तथाविधोक्तिः घटत एव । विचारे जहल्लक्षणया अभिहिते सति, ज्ञानस्य तत्साध्यस्य कथितप्रायत्वम् । विचारमभिप्रेत्य जिज्ञासापदस्य जहल्लक्षणेत्युक्तौ न काचित् अनुपपत्तिः । वस्तुनो लक्षणाद्वये सत्यपि विचारं प्रधानतयोद्दिश्य जिज्ञासापदस्य लक्षणा इति वचनं न विरुध्यते इत्याशयः । एवं विवरणमतानुरोधेन लक्षणाद्वयस्य सम्भवः समञ्जस इति यावत् ।

अथ वाचस्पतिमिश्रानुसारिमतं प्रपञ्च्यते जिज्ञासासूत्रे । एतन्मते श्रवणस्य विधित्वमेव नास्ति किं पुनर्नियमविधित्वम् ? "जिज्ञासासूत्रे कर्तव्येतिपदं नाध्याहर्तव्यम्, न वानुवादत्वदोषः" इत्येषां मतम् । सिद्धस्य ब्रह्मणः विचारात्मकं प्रयोजनमुद्दिश्यानुवादेऽपि दोषो नास्ति । "विष्णुरुपांशु यष्टव्यः अजामित्वाय" इत्यादावनुवादेऽपि तव्यप्रत्ययश्रवणमस्ति । 'उपांशु याजमन्तरा यजति' इति मूलमन्त्रमनूद्य विष्णुरुपांशु यष्टव्यः । अजामित्वाय नाम कालहरणदोषापनुत्तये इत्यर्थः । अत्र यष्टव्य इति तव्यप्रत्ययश्रुतावपि अनुवादत्वमस्त्येव । एवं सप्रयोजनानुवादे दोषाभावात् कर्तव्यपदं विनापि अनुवादस्य दर्शनात् कर्तव्यपदाध्याहारो निरर्थकः । किंचाप्राप्तत्वेन अननुवादत्वं यदि मनीषितं तर्हि वस्तुकथनपरमस्तु सूत्रम् । 'तत्त्वमसि'

'अयमात्मा ब्रह्म' इत्यादीन्यनुवादा नैव भवन्ति, तथापि तत्र विधेयभावो नास्ति, कर्तव्यपदाध्याहारोऽपि नास्ति। तस्मादुभयथापि कर्तव्यपदाध्याहारः अनावश्यकः। यो वा मुमुक्षुः तस्य ब्रह्मजिज्ञासा वर्तत एव। तस्मात् जिज्ञासा न विधेया। अनुवादो भवतु मा वा अध्याहारेण न भवितव्यम्।

अथ प्रवृत्तिसिद्धये अध्याहारः इति चेत् विषयप्रयोजनज्ञानादेव प्रवृत्तिसिद्धिः। साधनचतुष्टयसम्पन्नस्य ब्रह्मजिज्ञासा भवतीति वचने, ब्रह्म-ज्ञानमिष्यमाणं प्रयोजनं भवति, ब्रह्मणश्च विषयत्वं सूत्रोपात्तमस्त्येव। एवं विषयप्रयोजनप्रतिपादनार्थमिदं सूत्रम् नानुवादः न वाध्याहारः कर्तव्य-पदस्य। तथा च यो ब्रह्मज्ञानमिच्छति सोऽवश्यं विचारयति इत्यर्थसिद्धो विचारः। अर्थात् सिद्धे विचारे प्रवर्तयितुं पदशक्तेः दुर्विनियोगो न कर्तव्यः अनन्यलभ्यः शब्दार्थः इति शास्त्रोक्तेः। तस्मादध्याहारो नावश्यकः।

श्रोतव्य इति वेदवाक्यमूलकत्वात् जिज्ञासासूत्रस्य तयोः एकरूपार्थ-मध्याहारः इत्यपि न वाच्यम्। सर्वत्र श्रुतिसूत्रयोरैकरूप्येण भाव्यमिति नियमो नास्ति। विचारस्य विनिर्णयहेतुत्वेन तात्पर्यग्राहकं लोकसिद्धमेव। तस्मादपूर्वविधिः न भवत्येव।

यद्यपि विचारः लोकाधिगतः तथाप्यात्मसाक्षात्कारहेतुत्वं तस्य वेदैकसमधिगम्यम्· "आत्मा वा अरे द्रष्टव्य" इति चोदनामपहायान्यथा अनुपलम्भात्। तस्मादपूर्वविधिः किं न स्यादिति पूर्वः पक्षः।

"तं त्वौपनिषद पुरुषं पृच्छामि" इति ब्रह्मणः उपनिषद्गम्यत्वं यदा भवति तदा तद्विचारस्य तत्साक्षात्कारहेतुत्वं सम्भवत्येव। ब्रह्मप्रमाकरणत्वं वेदान्तवाक्यस्य सिद्धम्। तस्मात् वेदान्तवाक्यविचारः ब्रह्मसाक्षात्कारहेतु-रिति सिद्ध्यति। एवं लोकप्राप्ते विषये अपूर्वविधिः न सम्भाव्यते।

आत्मभिन्नस्य व्यावर्त्यस्याभावात् नियमविधिर्न सम्भाव्यते इति मिश्रानुयायिमतम्। गुरूपसत्तिं विना अधीयानस्य स्वतन्त्रविचारपरायणस्य भिन्नात्मविचारभ्रान्तिः भवेदिति गुरुरहितविचारो व्यावर्त्यः किं न स्यादिति पूर्वः पक्षः। "तद्विज्ञानार्थं स गुरुमेवाभिगच्छेत्···ब्रह्मनिष्ठम्" इति वाक्येन

गुरूपसदनं विधीयते तस्य दृष्टप्रयोजनं वेदान्तवाक्यविचाराधिगम एव। दृष्टप्रयोजने सत्यदृष्टप्रयोजनस्यान्याय्यत्वात्। तथा चोक्तम् :-- लभ्यमाने फले दृष्टे नादृष्टपरिकल्पना" इति। तस्मात् गुरुं विना वेदान्तविचारस्याप्रस्तुतत्वात् उपगमनविधिनैव स्वतन्त्रविचारव्यावृत्तौ व्यावर्त्यस्य अभावः। नियमविधेः ततो नावकाश इत्युत्तरः पक्षः।

भ्रान्त्या भिन्नात्मविचारे प्राप्ते तन्निवर्तनाय नियमविधिरस्त्विति पूर्वः पक्षः। "इदं सर्वं यदयमात्मा" इत्यादिवाक्येष्वपि द्वैतवादिनः भिन्नात्मविचारमुत्पादयन्ति। तान् प्रति यत्नो वृथा। ततः तदर्थं नियमविधिर्न स्वीकार्य इति।

कर्मकाण्डविषयभूतधर्मजिज्ञासानन्तर कर्तुः यजमानस्यात्मस्वरूपविचारायेद ब्रह्ममीमाँसाशास्त्रं प्रवृत्तम्। कालान्तरभाव्यात्मव्यतिरेकेण स्वर्गभोगासम्भवात् तादृगात्मजिज्ञासापरमिदं सूत्रम्। तत्र च कर्तुः आत्मत्वसामान्येन विचारविषयत्वात् कर्मविधिविचारो व्यावर्त्यः भवेत्। तस्मात् नियमविधिर्भवत्विति पूर्वः पक्षः।

आत्मविचारत्वेन कर्मणां यदि प्रसक्तिः स्यात् तर्हि बाह्यानां वैदिकानां च सर्वेषां भिन्नात्मविचाराः प्रसज्यन्ते। तस्मात् कर्मविचारस्यात्र प्रसक्तिरेव नास्ति। प्रसक्तस्यैव व्यावर्त्यत्वं स्यात्। अव्यावर्त्यत्वे च नियमविधिः नैव स्यादित्युत्तरः पक्षः।

एवमन्ततो गत्वा जिज्ञासापदस्य लक्षणाध्याहारौ न स्तः वाचस्पतिमिश्रानुयायिमते। अस्माभिस्तु वाचस्पतिमिश्रानुयायिमतस्य विवरणमतस्य च मध्ये तारतम्यपरिशीलनं यथामति कृतमन्यत्र दर्शयिष्यते।

"अथ जन्माद्यस्य यतः" इति द्वितीयं सूत्रं प्रस्तूयते। प्रथमसूत्रे प्रोक्तायाः ब्रह्ममीमांसायाः प्रमाणं श्रुतिः। समन्वयः श्रुतिवाक्यानां ब्रह्मणि प्रथमाध्याये, अविरोधः इतरदर्शनैः द्वितीये साधनं तृतीये, फलं चतुर्थे च वर्णयिष्यन्ते। तत्र सर्वप्रथमं जिज्ञासितस्य ब्रह्मणो लक्षणमुच्यते द्वितीयसूत्रेण। यातो वा...ब्रह्मे"ति श्रुतिनिर्दिष्टानां जन्मस्थितिलयानां

जन्मादीति बहुव्रीहिणा निर्देशः । संयोगेन समवायेन वा यत्र वर्तिपदार्थं सम्बन्धी अन्यपदार्थः तत्र प्रायेण तद्गुणसंविज्ञानः । तत्रातद्गुणसंविज्ञान-बहुव्रीहौ, जन्मादि अस्येति निर्देशः । चित्रगुमानयेत्यत्र अतद्गुणसंविज्ञानो-बहुव्रीहिः नागयज्ञोपवीतिनं पश्य इत्यत्र तद्गुणसंविज्ञानो बहुव्रीहिः, । तेषां गुणानां वृत्तिघटकपदार्थानां कार्यान्वयित्वेन संविज्ञानं यत्र सः तद्गुणसंविज्ञानोबहुव्रीहिः । संयोगसमवायान्यतरसम्बन्धेन सम्बन्धित्वं तद्गुणत्वम् तदितर सम्बन्धेन सम्बद्धित्वमतद्गुणत्वम् । "सर्वादीनि सर्वानामानि" इत्यत्र तद्गुणसंविज्ञानो बहुव्रीहिः । दृष्टसागर मानय इत्यतद्गुणसंविज्ञानो बहुव्रीहिः । जन्म आदि अस्येति जन्मादि इति व्युत्पत्तौ अस्य संसारस्य जन्म बभूव जन्मचाधुना पुनर्न सम्भवति, तस्मात् तत् जन्मापहाय तदन्यत् कार्यजातमतद्गुणसंविज्ञानेन गृह्यते । नचैतत् युज्यते । संसारस्य सर्वदा जायमानत्वात् ततः जन्मादयः अस्य इति विग्रहवाक्यं क्रियते तद्गुणसंविज्ञानबहुव्रीहौ । जन्मस्थितिभङ्गाः तदोद्भूतावयवा भवन्ति बहुवचनप्रयोगात् । तेषां च वृत्तिघटकपदार्थानां कार्यान्वयित्वेन जायमानतिष्ठद्विलीयमानस्संसारः यतः तत् ब्रह्मेति वाक्यार्थः सम्पद्यते । सेनावनादीनामिव समुदायमभिप्रेत्य अनुद्भूतावयव-भेदो यदा अन्यपदार्थो भवति तदा जन्मादिः अस्येति विग्रहः । जन्मादिः इति पुंलिङ्गशब्दः स्त्रीलिङ्गशब्दो वा भवति विशेष्यमभिप्रेत्य । जन्मादिः इत्येकवचनप्रयोगे तदितरयोः स्थितिभङ्गयोः अस्पष्टत्वात् अनुद्भूता-व यवभेद इति वर्णितम् । सूत्रे तु नपुंसकलिङ्गनिर्देशः सौत्रत्वात् साधुः । ब्रह्मपदस्यानुवृत्तिः तच्छब्दस्य चाध्याहारः । अस्य = प्रपञ्चस्य, यतः = यस्मात्, जन्मादि = सृष्टिस्थितिभङ्गं भवति तत् ब्रह्मेत्युक्तम् । इदं तावत् तटस्थलक्षणं भवति, स्वरूपभिन्नत्वे सति व्यावर्तकत्वं तटस्थलक्षणम् तथाहि :- जन्मादिकं प्रपञ्चनिष्ठं न तु ब्रह्मनिष्ठम् । प्रपञ्चो ब्रह्मणि कल्पितः तस्य प्रतियोगिकारणमपि ब्रह्मणि कल्पितम् । तस्मात् जन्मा-धिकारणत्वं ब्रह्मणः न स्वरूपलक्षणम्, अद्वैतसिद्धान्ते ब्रह्मणः जगत्प्रति अभिन्ननिमित्तोपादानकारणत्वमभिप्रेतम् । ततो जन्मस्थितिलयकारणत्वं वक्तुं जन्मादिग्रहणम् । तथा च ब्रह्म कुम्भकार इव कुम्भोत्पत्तौ राजवच्च

राजस्थेऽस्मिन् न निमित्तकारणमात्रं किन्तूपादानकारणमिति सिद्ध्यति । सत्यं ज्ञानमनन्तं ब्रह्मेति प्रतिपादितं च स्वरूपलक्षणम् । तटस्थलक्षणमेव घटते ब्रह्मणो न स्वरूपलक्षणमिति पूर्वः पक्षः । तथाहि :- सत्यादीनि लक्षणानि ब्रह्मणो यदि भिन्नानि, ब्रह्मणः परिपूर्णत्वं न सेत्स्यति, ब्रह्मणः स्वरूपलक्षणमेव भवितुं न शक्नोति । अथ अभेदे, न वाक्यार्थसिद्धिः, गुणप्रधानभावापन्नपदार्थसंसर्गो हि सर्वत्र वाक्यार्थः । नीलो घट इत्यादौ नीलगुणस्य घटस्य च भिन्नत्वात् । नीलत्वविशिष्टो घटः इति शब्दबोधे विशेषणविशेष्ययोः पृथक्त्वं स्फुटमवगम्यते । तर्हि सत्यत्वादिविशिष्ट यदि ब्रह्म स्यात्, ब्रह्मणः तद्विशेषणानां च भिन्नत्वात् स्वरूपलक्षणं न घटते । आम्रवृक्षः इत्यत्र आम्राभिन्नो वृक्षः इति बोधोऽपि विशेषणविशेष्यभावः यः क्रियते सः संसर्गं नावगाहते वैयाकरणानां मते । अस्यानुसारेण सत्यत्वादिलक्षणस्य ब्रह्मणश्चाभेदे सम्भवत्यपि परब्रह्मणि निर्विकल्पे विशेषणविशेष्यभावोऽपि न घटते । नैयायिकानां मते संसर्गोऽपि द्विविधः । शक्तिभास्यः आकांक्षाभास्यश्च । शक्तिभास्यः घटघटत्वयोः समवायः आकांक्षाभास्यश्च नीलो घट इत्यत्र नीलघटयोरभेदः । प्राभाकराणां मते संसर्गः शक्य एव । अभेदबोधेऽपि ते संसर्गमभ्युपयन्ति । एवं चानिर्वाच्यस्य परम्परया तटस्थलक्षणमेव युक्तं न स्वरूपलक्षणमिति ।

अत्रोच्यते—यत्र पदार्थः प्रमितः तत्र संसर्गो वाक्यार्थः यथा नीलकमलमानयतीत्यत्र । कमलं किमिति नीलं किमिति प्रमितिरस्त्येव । तस्मात् नीलत्वविशिष्टकमलकर्मकमानयनमिति वाक्यार्थः । यत्र पुनः पदार्थप्रमितिरेव न जाता तत्राखण्डपदार्थ एव वाक्यार्थः । यथा अस्मिन् ज्योतिर्मण्डले कश्चन्द्र इति प्रश्ने प्रकृष्टप्रकाशः चन्द्र इति वाक्यमखण्डचन्द्रस्वरूपप्रतिपत्तिपरम् । प्रकृष्टप्रकाशवैशिष्ट्यमेव वाक्यस्याभिमतम् अर्थात् चन्द्रः प्रकृष्टप्रकाशवानिति वाक्यार्थः सिद्धयति । तथाऽत्रापि प्रमितिपरेऽपि वाक्ये संसर्गावगाहिज्ञानमस्त्येवेति पूर्वपक्षः ।

प्रकृष्टप्रकाशश्चन्द्रः इति वचनश्रवणात् शब्दप्रमाणजन्योऽनुभवः चन्द्रस्य प्रकृष्टप्रकाशविशिष्टत्वं च संयुक्तसमवायस्सन्निकर्षः । चक्षुस्-

संयुक्ते चन्द्रे प्रकृष्टप्रकाशस्य समवायात् । एवमिन्द्रियार्थसन्निकर्षजन्य-प्रत्यक्षेण प्रकाशस्य ग्रहणं भवति न तु शब्दप्रमाणेनेति । तस्मात् चन्द्रावगत्यनन्तरमेव प्रत्यक्षप्रमाणेन तस्य चन्द्रस्य प्रकृष्टप्रकाशविशिष्टत्वं ज्ञायते न तु पूर्वमेव । ततः प्रमितिपरादस्मात् वाक्यात् प्रत्यक्षप्रमाणोपात्तार्थः अवगम्यते इति न वक्तुमुचितम् इति सिद्धान्तः । प्रकृष्टप्रकाशस्य चन्द्रत्व वैशिष्ट्यं न वाक्यार्थः । प्रकृष्टप्रकाशं दृष्ट्वा तद्गतधर्मस्य जातेर्वा अपृष्टत्वात् । धर्मत्वं व्यापको धर्मः । जातिबाधकाभावे धर्मस्य जातित्वं सिद्ध्येत् । यथा घटत्वाकाशत्वयोः धर्मसाम्येऽपि घटत्वस्यैव जातित्वम् न त्वाकाशस्य । एकव्यक्तिवृत्तित्वेन जातेरभावात् । "व्यक्तेरभेदस्तुल्यत्वं संकरोऽथानवस्थितिः । रूपहानिरसम्बन्धो जातिबाधकसंग्रहः" इति कारिकावल्याः एकव्यक्तिवृत्तित्वं न जातिरिति ज्ञायते । चन्द्रत्वं तु धर्मः । अथवा प्रकृष्टप्रकाशं दृष्ट्वा कोऽस्य व्यवहारः इति प्रश्नश्च न पृष्टः । तस्मात् प्रकृष्टप्रकाशस्य चन्द्रशब्दवाच्यत्वमपि न वाक्यार्थः स्वरूपमात्रस्य सत्त्वात् ।

प्राभाकराणां मते अन्वीयमानपदार्थसंसर्गपरत्वमेव पदानाम् । संसर्गश्च शक्य एव वेदवाक्यानां प्रवृत्तिपरत्वात् तदन्यवादानां शब्दबोध एव नाङ्गीक्रियते तैः । राजासौ याति इत्यादीनि न प्रमाणानि तेषां मते । घटमानयेत्यादौ आनयनान्विते घटे एव शक्तिः न तु केवले घटे । तच्च न साधु । लक्षणवाक्येषु पदार्थमात्रनिष्ठत्वमपि व्युत्पाद्यमिति सम्यगाह तत्रभवानन्नम्भट्टः । तस्मात् सत्यं ज्ञानमनन्तं ब्रह्मेति लक्षणवाक्यं पदार्थमात्रनिष्ठं सत् प्रमाणभूतमेव प्रवृत्तिपरत्वाभावेऽपि । याथात्म्यज्ञापनमपि प्रमाकरणं भवति । तस्मात् सत्यं ज्ञानमनन्तमिति लक्षणवाक्यं प्रमाणमेव ।

यदि प्रमाणं तर्हि सर्वेषां पदार्थानां सखण्डत्वात् अखण्डार्थबोधः कथं स्यादिति प्रश्नः उदेति ।

तत्रोच्यते :– लोके पदानां विशिष्टशक्तत्वेन तदर्थानां सखण्डत्वेपि अर्थवादवाक्येष्विव कुत्र चिदखण्डत्वमभ्युपेयम् । तच्च लक्षणवाक्यं सत्यं

ज्ञानमनन्तं ब्रह्मेति । सत्यत्वज्ञानत्वानन्तत्वविशिष्ट ब्रह्मपदार्थो न वक्तव्यः ब्रह्मणः अविशिष्टत्वात् अभिन्नत्वात् अप्रमेयत्वात् । सत्यत्वादीनि विशेषणानि यदि स्युः, ब्रह्म च विशिष्टं यदि स्यात् सखण्डं प्रमाविषयं जगदन्तर्गतं च भवति । जगतो विलक्षणत्वात् ब्रह्माप्रमेयं किमपि लक्षयन्ति सत्यादिविशेषणानि । अत एव विशिष्टवाचकानां पदानां लक्षणोपात्ता कल्पतरौ । प्रकृष्टप्रकाशश्चन्द्रः इति वाक्ये अन्वयानुपपत्त्या लक्षणया प्रकाशविशिष्टत्वं गृह्यते । सत्यं ज्ञानमनन्तमिति वाक्ये तु अनन्तादिपदैः विशिष्टत्वं बाध्यते । विशेषणैः यदा सखण्डं भवति तदा अनन्तत्वं न घटते । तस्मात् त्रिभिः विशेषणैः अखण्डार्थं एव लक्षणीयो भवति । वायुर्वै क्षेपिष्ठा देवता इत्याद्यर्थवादवाक्यानां लक्षणया यागप्राशस्त्यबोधकत्वं, तथैव सत्यज्ञानानन्तपदानां लक्षणया अखण्डब्रह्मावगमकत्वम् । न चैतावता सर्वत्र लक्षणवाक्येषु लक्षणया अखण्डार्थत्वमिति भ्रमितव्यम् । सेनावनादिशब्दानां समुदायरूपेण अखण्डार्थत्वाभावेऽपि पदार्थमात्रनिष्ठत्वं सर्वप्रसिद्धमिति ।

तत्रायमाक्षेपः — लक्षणया एकह्मपरत्वे सत्यपदेनैकेनैव तादृगर्थलाभः । तस्मिंश्च सति पदान्तरवैयर्थ्यमापतति । किं चैकार्थपरत्वे पर्यायपदान्येव तानि भवन्ति । उक्तार्थलाभे पर्यायपदयोरितरयोरुपादानं च व्यर्थमिति ।

उच्यते :- यदा शक्यार्थो भिद्यते तदा सत्यज्ञानानन्तपदानि पर्यायाः न भवन्ति । पर्यायपदत्वाभावेऽपि वायुर्वै क्षेपिष्ठादेवतेत्यादिवाक्ये बहूनामपि पदानामेकस्मिन् प्राशस्त्ये यथा लक्षणा भवति तथात्रापि लक्षणया ब्रह्म प्रतिपाद्यते । सत्यपदेनैव ब्रह्मणः प्रतिपादने इतरपदयोः वृथात्वमिति न शङ्कनीयम् । व्यावर्त्यस्य भिन्नत्वात् असत्यात् जडात् परिच्छिन्नात् ब्रह्म भिन्नमिति पर्यवस्यति ।

ननुव्यावृत्तयः कथं ब्रह्मभिन्नाः ? ब्रह्मणः अद्वयत्वादखण्डत्वाच्चेति सत्यामाकांक्षायाम्, अभिन्ना इत्येव समाधानम् । यद्यभिन्नास्तर्हि पदान्तर-

वैयर्थ्यं तदवस्थमेव । व्यावर्त्यस्याभावात् पदेनैकेनैव लक्षणं सम्पद्यते इति ।

उच्यते ।— एकमेव वस्तु यथा प्रतियोगि इति अनुयोगि इति कारणमिति व्यापकमिति बहुशब्दैः व्यपदिश्यते अपेक्षाकृतं व्यावर्त्यत्वं च न निहन्यते वैयर्थ्यं च नास्ति तथात्रापि युज्यते । भूतले घटः इत्यत्र भूतलानुयोगिकः घटप्रतियोगिकः संयोगः घटः प्रतियोगी भवति । घटे जल वर्तते इत्यत्र घटः पुनः अनुयोगी भवति । सहस्रघटाभिषेके घटः निमित्तकारणं भवति । मृदपेक्षया च कार्यं भवति । एवं च कारणत्वादिकं धर्मान्तरं न भवति । इतरव्यावृत्त्यर्थं प्रतियोग्यनुयोगि- कारणादि पदेषु सत्स्वपि व्यावृत्तयः वस्तुतो न भिद्यन्ते । तथैव व्यावृत्तीनां ब्रह्माभेदेऽपि प्रतियोगिभेदादवैयर्थ्यम् । असत्यस्य जडस्य परिच्छिन्नस्य च प्रतियोगिनः भिन्नत्वात् पर्यायत्वं नास्ति पदानाम् । यथा प्रतियोग्य-नुयोगिकारणकार्यादिशब्दा भिन्ना अपि वस्त्वन्तरापेक्षया एकमेव वस्तु अभिदधति, तथा सत्यज्ञानानन्तपदानि असत्यजडपरिच्छिन्नापेक्षया भिन्नान्यप्येकमेवाद्वितीयं ब्रह्म लक्षयन्ति । तस्मात् सत्यं ज्ञानमनन्तं ब्रह्मेति स्वरूपलक्षणमिति सर्वं समञ्जसम् । भेदनिरासप्रकरणे तत्रभवतायं प्रसङ्गः एवमेव प्रस्तुतः । तथाहि न च व्यावृत्तीनां ब्रह्मातिरिक्तत्वे अद्वैत-हानिः, अनतिरेके तदेव पदान्तरवैयर्थ्यमिति वाच्यम् । व्यावृत्तीनां ब्रह्मातिरेकेऽपि व्यावृत्तिप्रतियोगिनां घटादीनां भेदेनापर्यायत्वोपपत्तेः इति । इतः परं मिताक्षरायां यदुक्तं तदन्यत्र प्रस्तूय प्रपञ्चयिष्यामः "चतुर्मुखः हिरण्यगर्भश्च" इत्याकारके निबन्धे शास्त्रयोनित्वाधिकरणम्।

श्लो. "अनादिनिधना नित्या वागुत्सृष्टा स्वयम्भुवा ।
आदौ वेदमयी नित्या यतस्सर्वाः प्रवृत्तयः ॥"

इति स्मृतिवचनात् वेदस्य नित्यत्वं सिद्धम् । वेदस्य जगन्मूलकत्वं यदा-वगतं तदा ब्रह्मणः जगन्मूलकत्वे शङ्का जायते । तत्समाधानाय शास्त्र-योनित्वाधिकरणमारब्धम् ।

"तस्मात् यज्ञात् सर्वहुतः ऋचस्सामानि जज्ञिरे छन्दांसि जज्ञिरे तस्मात् यजुस्तस्तादजायत" इति यज्ञशब्दवाच्यात् ब्रह्मणः वेदोत्पत्तिप्रतीतेः

वेदकर्तृत्वमिष्यते । तस्मात् जगद्योनित्ववत् शास्त्रयोनित्वमपि ब्रह्मणः अव्याहतम् । तर्हि वेदस्यापौरुषेयत्वं कुतः सेत्स्यति स्वयम्भुवोत्सृष्टत्वादिति प्रश्ने समाधीयते:- पूर्वपूर्वानुपूर्वीकसजातीयानुपूर्वीकत्वेन वेदस्य अपौरुषेत्वमव्याहतम्, "धाता यथापुर्वमकल्पयत्" इत्युक्तत्वात् । कल्पादावीश्वरेण पूर्वकल्पसिद्धसजातीय एव वेदराशिः स्मृत्वोपदिश्यते इति हेतोः वेदस्य नित्यत्वमव्याहतम् । इदं च नित्यत्वं न ब्रह्मापेक्षया । अतश्च न पारमार्थिकं नित्यत्वं वेदस्य । "अस्य महतो भूतस्य निश्वसितमेतत् यदृग्वेदो यजुर्वेदस्सामवेदः" इति वचनेनेश्वरस्मृतिविषयस्यापि वेदस्यापौरुषेयत्वमयत्नसिद्धम् । ब्रह्मणः वेदकर्तृत्वात् सर्वज्ञत्वं सिद्धम् । यच्छास्त्रं येन प्रणीतं स तच्छास्त्रादधिकज्ञः यथा पाणिन्यादिः इत्यनुमानरचना प्रशस्ता । वेदवचनैः ब्रह्मणः सर्वज्ञत्वं सिद्धमेव । जन्माद्यधिकरणेन सिद्ध जगद्योनित्वं वेदमूलकर्तृत्वेनापि स्थिरीकर्तुमिदं सूत्रम् । कूटस्थ नित्यता ब्रह्मणः; प्रवाहनित्यत्वं ससारस्य । त्रिकालाबाधितत्वं सत्यत्वम् । एवं च सृष्टिप्रलयावनिच्छतां मीमांसकानां मते वर्णानां नित्यत्वम् । तथाप्यद्वैतश्रुतिबलात् न वेदस्य पारमार्थिकं सत्यत्वम् । सत्यत्वाभावेऽपि वेदस्य नित्यत्वमविरुद्धम्, पुरुषप्रयत्नासिद्धत्वात् अकृत्रिमत्वाच्च ।

न्यायकुसुमाञ्जलावनुमानेनेश्वरः साध्यते एवम् :-

श्लो :- कार्यायोजनधृत्यादेः
पदात् प्रत्ययतः श्रुतेः ।
वाक्यात् संख्याविशेषाच्च
साध्यो विश्वविदव्ययः ॥ इति

कार्यात् = विश्वस्य कार्यत्वात्
अयोजनात् = परमाणुद्व्यणुकत्र्यणुकादिसंयोगात्
धृत्याः = भूमेः धारणशक्तेः
आदेः = भूम्यादीनां विश्लेषात्
पदात् = अस्मात् पदादयमर्थो बोद्धव्यः इतीच्छायाः सत्वात्
प्रत्ययतः = निश्वासवत् सहजज्ञानात्

श्रुते: = वेदं प्रति कारणत्वात्

वाक्यात् = पदसमूहस्य विशिष्टार्थगमकत्वात्

संख्याविशेषाच्च = परमाणूनामसख्येयत्वात्

विश्वविद अव्यय: साध्यो भवति। एवमनुमानेन ब्रह्मविषयकं ज्ञानं सम्भवतीति ब्रह्मण: अनुमानसाध्यत्वं सम्भाव्य तन्निरासाय सूत्रार्थ: अन्यथा व्याख्यायते द्वितीयवर्णकमिति। "वर्णका तान्तवे" इत्युक्तत्वात् सुत्राणामुपरि वर्णान्तरसंक्रान्तिरिवान्यार्थक्रान्तिरित्यर्थ: घटते। ब्रह्म मानान्तरवेद्यं न भवति शास्त्रयोनित्वात् शास्त्रं वेद: प्रमाणं यस्य तत्त्वादित्यर्थ:। "तं त्वौपनिषदं पुरुषं पृच्छामि", "नावेदवित् मनुते तं बृहन्तम्" इत्यादिश्रुतिभि: ब्रह्मण: उपनिषन्मात्रवेद्यत्वमवगतम्। "यतो वाचो निवर्तन्ते अप्राप्य मनसा सह "इति वचनात् वेदवेद्यत्वमपि कथमिति चेदुच्यते– वेदान्तजन्यवृत्तिविषयत्वेन शास्त्रयोनित्वम्। चैतन्याविषयत्वेनाप्रमेयत्वमित्युभयश्रुत्युपपत्ति:। तदुक्तं पञ्चदश्याम् – "फलव्याप्यत्वमेवास्य शास्त्रकृद्भि: निवारितम्। ब्रह्मण्यज्ञाननाशाय वृत्तिव्याप्तिरपेक्षिता" इति। "बुद्धितत्स्थचिदाभासौ द्वावेतौ व्याप्नुतो घटम्। तत्राज्ञानं धियानश्येत् अभासेन घट: स्फुरेत्" इति च। चिदाभासस्य घटो यथा विषयो भवति तथा ब्रह्म, विषयो न भवति। बुद्धिरपि तथैव ब्रह्म न व्याप्नोति। किन्तु वेदान्तजन्यवृत्तिविषयत्वं तु ब्रह्मण: साधनदशायामङ्गीक्रियते। तच्च शास्त्रयोनित्वाधिकरणेन वेदैकसमधिगम्यमित्यभिप्रेतमिति सर्वमवदातम्। अत्र प्रथमवर्णका जन्माद्यधिकरणसम्बद्धा द्वितीयवर्णका समन्वयाधिकरणप्रवणेति मन्तव्यम्।

समन्वयाधिकरणवृत्तिरस्माभिरितरप्रसङ्गेषु विशिष्य विमृश्यते इति न तद्विस्तरोऽत्र प्रदर्श्यते।

—o—

# आत्मदर्शनम्

"आत्मन् पश्यन् सर्वभूतानि न मुह्येत् चिन्तयन् कविः आत्मानं चैव सर्वत्र यः पश्येत् स वै ब्रह्मा नाकपृष्ठे विराजति निपुणोऽणीयान् विसोर्णाया: यस्सर्वमावृत्य तिष्ठति वर्षीयांश्च पृथिव्या ध्रुवः सर्वमारभ्य तिष्ठति स इन्द्रियैः जगतोऽस्य ज्ञानात् अन्योन्यस्य ज्ञानात् परमेष्ठी विभाजः तस्मात् कायाः प्रभवन्ति सर्वे समूलं शाश्वतिकस्सनित्यः" इत्यापस्तम्बधर्मसूत्रे प्रथमप्रश्ने अष्टमपटले प्रोक्तम्। अस्य उज्ज्वलाख्या हरदत्तव्याख्या :- किं पुनरात्मा प्रयत्नेन लब्धव्यः? ओमित्याह- आत्मेत्यादि। आत्मलाभात् परमुत्कृष्टं लाभान्तरं नास्ति। तस्मात् तस्य लाभाय यत्न आस्थेय इति। कः पुनरसावात्मा-प्रत्यगात्मा ...

देहेन्द्रियादिविलक्षणतया परमप्रेमास्पदस्य जीवात्मनः अभिज्ञानं नितान्तमावश्यकं यदर्थमारम्भः कृतः धर्मशास्त्रेषु क्रोधादिनिर्हरणद्वारा आत्मगुणाभ्यासद्वारा च तादृगभिज्ञानमेव प्रथमसोपानमात्मा वा अरे द्रष्टव्यः इति बृहदारण्यकोपनिषदा समभिहितम्। "आत्मनो वा अरे दर्शनेन श्रवणेन विज्ञानेन इदं सर्वं विदितं भवति" इत्यनूच्य दर्शनस्य करणत्वं विस्पष्टमुक्तम्। आत्मनि वा दृष्टे श्रुते मते विज्ञाते इत्यादिसप्तम्यन्तेन च पुनस्तदेव प्रथमसोपानत्वं प्रतिपादितम्।

पञ्चपादिकायां जिज्ञासाधिकरणे नवमवर्णके चोक्तम् ", इदमत्र प्रस्तुतम्- क्रियाकारकफलात्मकात् संसारात् विरक्तायै मैत्रेय्यै मुमुक्षवे मोक्षसाधनात्मज्ञानं प्रतिपिपादयिषन् "न वा अरे पत्युः कामाय पतिः प्रियो भवति "इति पत्यादेरीप्सिततमत्वं प्रतिषिध्य आत्मन ईप्सिततमत्वमाह" इति। एवं च प्रकरणानुरोधेन आत्मन ईप्सिततमत्व- ज्ञानमेव आत्मदर्शनम्।

श्रीमदप्पयदीक्षितरचितशिवतत्त्वविवेके चैवमुक्तम्:- "सत्यं ज्ञानमनन्तं ब्रह्म "अस्थूलमनणु अह्रस्वम्" इत्यादयो वेदान्ता: तत्पदार्थनिष्ठा:। केचित् त्वम्पदार्थनिष्ठा: यथा "योऽयं विज्ञानमय: प्राणेषु" इत्यादय:। केचित् पदार्थद्वयोभयनिष्ठा: महावाक्यरूपा: यथा "तत्त्वमसि" "अहं ब्रह्मास्मि "अयमात्माब्रह्म," प्रज्ञानं ब्रह्म" इत्यादय:। तद्रीतिमनुसृत्य त्वम्पदार्थ: प्रत्यगित्यनेन दर्शित:। तेनात्माभिमानविषयेषु देहेन्द्रियादिषु इदन्तया बहिर्भावमापद्यमानेषु प्रातिलोम्येनान्तर्मुखतया गच्छतीव चित्तवृत्ते:, तथागमनादिति निष्कृष्टाहङ्कारो जीव इत्युच्यते" इति। एतद्रीत्या चात्मा वा अरे द्रष्टव्य: श्रोतव्यो मन्तव्यो निदिध्यासितव्य: इति वाक्यं पदार्थद्वयोभयनिष्ठानां वाक्यानामन्यतमम्। अतोऽत्रात्मशब्दार्थ: अहमाकार: देहेन्द्रियादिर्न स्यात् किन्तु त्वम्पदार्थ: जीव एव यावत् आत्मदर्शनम्। तत: परं ब्रह्मात्मैक्यपर:।

प्रत्यगात्मनश्च निर्वचनम्," अनिर्वचनीयेभ्यो देहेन्द्रियादिभ्य: प्रतीपं निर्वचनीयमञ्चति इति प्रत्यङ्" इति भामत्यामभिहितञ्च पूर्वोक्तं दृढीकरोति देहेन्द्रियादीनां निर्वचनं न सत्वेन वा नाप्यसत्वेन वा भवितुमर्हति। अत एव वेदान्तिन: अनिर्वचनीयख्यातिवादिन:। तत: प्रत्यक्चेतनाधिगमोऽप्यन्तरायाभावश्च" इति योगसूत्रेण चास्य प्राधान्यं ख्यापितम्।

आत्मदर्शनञ्च वेदान्तपञ्चदश्यामेवं वर्णितम् ध्यानप्रदीपे :—

"देहोपलमपाकृष्य बुद्धिकुद्दालकात् पुन:
खात्वा मनोभुवं भूयो गृह्णीयान्मां निधिं पुमान्
अर्थोऽयमात्मगीतायामपि स्पष्टमुदीरित:"—
विचाराक्षम आत्मानमुपासीतेति सन्ततम् "

किञ्च उत्तराच्चेदाविर्भूतस्वरूपस्तु १९-३-१ इत्यत्र शङ्करभाष्ये "दृष्टिश्रुतिमतिविज्ञातयो हि जीवस्वरूपम्" सर्वो हि जीव: पश्यन् शृण्वन् मन्वानो विजानन् व्यवहरति अन्यथा व्यवहारानुपपत्ते: "इत्युक्तम्। अत्र च दर्शनश्रवणमनननिदिध्यासनान्येव भङ्ग्यन्तरेण प्रोक्तानीति तद्विदो जानन्त्येव। दर्शनश्रवणमनननिदिध्यासनानां साधनानामनुष्ठानं

यावत् तावत् जीवस्वरूपं सूचितम् । साधनानां यदानपेक्षा तदा जीवस्वरूपस्य ब्रह्मैक्यमिति तात्पर्यम् । अस्यां पुनरुक्त्यामपि दर्शनं प्रथममभिहितं न त्वन्ते । तथा च दर्शनं नाम "कश्चिद्धीरः प्रत्यगात्मानमैक्षत् आवृत्तचक्षुः अमृतत्वमिच्छन्" इति वर्णितम् जीवस्वरूपाभिज्ञानमेव । प्रत्यगात्मप्रत्यभिज्ञानानन्तरमेव गुरोः श्रृणुयात् 'अयमात्मा ब्रह्म' इत्यादिकानि ब्रह्मात्मैक्यबोधकवाक्यानि । श्रवणविषयभूतं ब्रह्मात्मैक्यमेव मननारूढं निदिध्यासननिष्ठं च सत् सम्यग्दर्शनाय कल्पते ।

अत एवास्माभिः प्रतिपाद्यते "आत्मा वा अरे द्रष्टव्यः श्रोतव्यो मन्तव्यः निदिध्यासितव्यः" इत्यत्रात्मदर्शनं गुरूपदेशसापेक्षं न भवति कल्पनाबलात् । न च गुरूपदेशासम्भवे दर्शनस्य याज्ञवल्क्येन मैत्रेय्यै उपदेश एव न घटते इति वाच्यम् । वेदे पुराणेतिहासादिषु वस्तुगतिकथनपराणि वचनानि तादृशान्युपलभ्यन्त एव । तथाहि :– "आचार्याय प्रियं धनमाहृत्य प्रजातन्तुं माव्यवच्छेत्सीः" इत्यप्याचार्यः अन्तेवासिनमनुशास्ति । परीक्षिते श्रीशुकेन भागवतं वर्णितमित्यपि भागवते दृश्यते । तस्मादात्म दर्शनं कर्तव्यमिति याज्ञवल्क्येन प्रोक्तेऽपि युक्त्यनुसारेण श्रवणात् प्राक्तनत्वं तस्य समर्थनीयम् । यथा वयं ब्रूमः तथा गुरुरपि ब्रूयात् प्रथममात्मदर्शनं ततः श्रवणं करणीयमिति । न तावता आत्मदर्शनं श्रवणपदेनापोह्यते न वा श्रवणं तस्य अङ्गतामियात् । श्रृण्वन्नालपन्नेव बालः यथा प्रथमकक्ष्यायां गुरोः श्रोतुमुपविशति तथा परमप्रेमास्पदस्य स्वस्य जीवात्मनः शरीरेन्द्रियविलक्षणत्वं पश्यन् असन्तुष्टः शिष्यः गुरुमुपेयात् आत्मनः परिपूर्णस्वरूपं जिज्ञासुः । गुरोः श्रवणं च ब्रह्मात्मैक्यानुकूलन्यायविचाररूप प्रथमसोपानमात्मदर्शनमन्तर्भावयति जिज्ञासासूत्रे अजहल्लक्षणया । श्रोतव्यपदस्य गुरोस्सकाशात् श्रवणमर्थः तदाधारेण तत्पूर्वस्यात्मदर्शनस्य गुरोरधिगमो नास्ति इत्यभ्यूह्यते । तस्मादस्माभिरेव मुच्यते यत् दर्शनश्रवणमनननिदिध्यासनानि इत्याकारकं सोपानभूतं साधनचतुष्टयमन्तरङ्गमिति । ब्रह्मसाक्षात्कारस्य दृष्टफलस्य सम्भवात् अवघातवत् फलसिद्धिपर्यन्तं श्रवणादीनामनुवर्तमानत्वात् चतुर्थाध्यायारम्भे

प्रथमाधिकरणे चैषामावृत्तिरभिहिता। तस्मादन्तरङ्गं साधनचतुष्टयमेतदिति सुष्ठूक्तम्। ब्रह्मसूत्रग्रन्थस्य प्रथमाध्यायः श्रवणाध्याय इति। द्वितीयाध्यायः, मननाध्याय इति तृतीयाध्यायः, निदिध्यासनाध्याय इत चतुर्थाध्यायः फलाध्यायः इति विदुषामभिमतम्। तर्हि दर्शनस्य को वा अध्यायः इत्युक्तावुच्यते। दर्शनं प्रथमसोपानं सर्वप्रथममपेक्षितं योग्यत्वम्। तच्च बहिरङ्गसाधनचतुष्टयेन अथशब्दासूचितेन सम्पाद्यते। तच्च नित्यानित्यवस्तुविवेकः शमादिषट्कसम्पत्तिः इहामुत्रार्थफलभोगविरागः मुमुक्षुत्वं चेति तद्विदो जानन्ति। बहिरङ्गसाधनचतुष्टयबलात् आत्मदर्शनमधिगम्यते ब्रह्मणः यदापातज्ञानं कथयितुं शक्यते। तदापातज्ञानञ्च ब्रह्मजिज्ञासासूत्रे जिज्ञासापदे ज्ञाधातोः वाच्यार्थः। सन्प्रत्ययस्य इच्छा वाच्यार्थः। विचारे च लक्षणा। विचारश्च ब्रह्मात्मैक्यज्ञानानुकूलन्यायविचारः इति परिष्कारः कृतः। ब्रह्मात्मैक्यज्ञानं च साध्यम् साध्ये ज्ञाधातोः वाच्यार्थभूतमात्मज्ञानमप्यन्तर्भवतीति सेयमजहल्लक्षणा। आत्मदर्शनं चेत्थं प्रथमसोपानं प्रथमसूत्रे गर्भीकृतमित्यस्माकमाशयः आशयानुरूपा कल्पना च।

यद्यप्यस्मदुक्तं शङ्करभाष्यानुगामि तथापि बहुव्याख्यानां भाष्यावलम्बिनीनां मते आत्मदर्शनंब्रह्मात्मैक्यसाक्षात्कारापरपर्यायसम्यग्दर्शनाभिप्रायं वर्तते। अतस्तदुक्तीः परिभाव्य स्थूणानिखननन्यायेन स्वमतस्थापनाय तदुपष्टम्भकवाक्यान्युद्ध्रियन्ते :–

वाक्यान्वयाधिकरणे "विज्ञातारमरे केन विजानीयात् इति कर्तृवचनेनोपसंहरन् विज्ञानात्मानमेवेहोपदिष्टं दर्शयति इत्यात्मदर्शनं जीवात्मदर्शनाभिप्रायेण शङ्करभाष्ये निक्षिप्तमिति नास्मदुक्तं भाष्यविरुद्धं मन्तव्यम्। "अस्यैव परमात्मनः अनेनैव विज्ञानात्मभावेनावस्थानादुपपन्नमिदमभेदाभिधानमिति काशकृत्स्न आचार्यो मन्यते—-दर्शितं तु पुरस्तात् काशकृत्स्नीयस्य पक्षस्य श्रुतिमत्त्वम् इति वचनात् प्रत्यगात्मनः परमात्माभिन्नत्वात् उपक्रमे जीवाभिज्ञानमित्यर्थो न दुष्यति, पर्यन्ते "इदं सर्वं विदितं भवति" इत्याकारकं सम्यग्दर्शनमेव चरमलक्ष्य-

मिति सर्वोपपन्नत्वात् । सम्यग्दर्शनञ्च ब्रह्मात्मैक्यसाक्षात्कारः अपरोक्षानुभूतिपदवाच्यः इति यावत्

तदनन्यत्वमारम्भणशब्दादिभ्यः १४-१-२ इत्यत्र शङ्करभाष्ये" न च यथा ब्रह्मणः आत्मैकत्वदर्शनं मोक्षसाधनमेवं जगदाकारपरिणामित्व दर्शनमपि स्वतन्त्रमेव कस्मैचित्फलायाभिप्रेयते"इत्युक्तम् । तस्मादात्मदर्शनपदेन केवलेन तदेव ब्रह्मात्मैक्यदर्शनं वक्तुं नोचितम् यतः खलु श्रवणमनननिदिध्यासनेभ्यः प्रागेव तदभिहितम् ।

कर्ता शास्त्रार्थवत्त्वात् --३३-३-२ इत्यत्रशङ्करभाष्ये "तथेदमपि शास्त्रमर्थवत् भवति एष हि द्रष्टा श्रोता मन्ता बोद्धा कर्ता विज्ञानात्मा पुरुषः"इति । किंच कर्त्रधिकरणे तस्मिन्नेव " समाध्यभावाच्च "इतिसूत्रावसरे आत्मा वा अरे द्रष्टव्यः सोऽन्वेष्टव्यः स विजिज्ञासितव्यः-सोऽप्यसत्यात्मनः कर्तृत्वे , नोपपद्येत "इत्युक्तम्

यदेवं विद्ययेति हि १८-१-४ इत्यत्रशङ्करभाष्ये "श्रवणमननश्रद्धातात्पर्याद्यन्तरङ्गकारणापेक्षं ब्रह्मविद्यया सहैककार्यं भवतीति सिद्धम् "इत्युक्तम् । अत्र चात्मदर्शनमपहाय श्रवणमननाद्युक्तमिति समञ्जसमस्मदुक्तं यतस्तत् श्रवणात् प्राग् सर्वप्रथमतया जिज्ञासासूत्र एवान्तर्गतम् । किंच मनुष्यः पश्यति श्रृणोति मनुते ध्यायति तस्य चेदृशः बुद्धिपरिणाहः पूर्वोक्तरीत्या भाष्यनिरूपित एव । ततश्चदर्शनं श्रवणात् प्रागवश्यम्भावि । पाठक्रमादर्थक्रमो बलीयानिति मीमांसान्यायमवलम्ब्य ये केचित् श्रवणमनननिदिध्यासनेभ्यः परमात्मदर्शनं निनीषन्ति न ते विमृश्यकारिणः । सर्वथा प्रत्यगात्मज्ञानमात्मदर्शनं श्रवणात् प्रागवश्यम्भावि ।

तथाहि-कारणत्वेन चाकाशादिषु यथाव्यपदिष्टोक्तेः १४ समाकर्षात् १५-४-१ इत्यत्रवैयासिकन्यायमालायाम् "क्वचिन् सच्छब्देनोक्तस्य ब्रह्मणः सर्वजीवस्वरुपविवक्षया आत्मशब्देनाभिधानात्" इत्युक्तम् । सर्वजीवस्वरूपविवक्षायाश्च प्रयोजनं भवति ब्रह्मात्मैक्यसाक्षात्काररूपं

यद्विना केवलं ब्रह्मज्ञानं परोक्षं सम्भवति। अत एव वाक्यान्वयात् १९-४-१ इत्यादिसूत्रसन्दर्भेऽपि अधिकरणरत्नमालायाम्" जीवात्मज्ञानं च नामृतत्वसाधनम्। तस्मात् भोगप्रीतिसूचितं जीवमनूद्य तस्य ब्रह्मत्वं प्रतिपाद्यते" इत्युक्तम्। जीवात्मानुवादश्च दर्शनपदेन कृतः यतः परं श्रवणादौ ब्रह्मात्मैक्यविचारः सरणिमारोहति। "कश्चिद्धीरः प्रत्यगात्मानमैक्षत् आवृत्तचक्षुः अमृतत्वमिच्छन्" इति कठोपनिषदुक्तरीत्या आत्मदर्शनममृतत्वलाभाय प्रथमसोपानायते। केवलजीवात्मज्ञानं च नामृतत्वसाधनं यथा वैयासिकन्यायमालायामुक्तम्। तर्हि कठोपनिषदो वचनस्य का गतिः ? तस्मादस्मदुक्तसरणिः श्रेयसी साधीयसी च। प्रत्यगात्मज्ञानं विना परमात्मज्ञानं न स्यात् तस्मात् प्रत्यगात्मानमनूद्य तस्य ब्रह्मत्वं प्रतिपाद्यते इति न्यायमालोक्तिः अस्मत्सिद्धान्तमुपष्टम्भयति।

परमतस्सेतून्मानसम्बन्धभेदव्यपदेशेभ्यः ३१-२-३ इत्यत्र आत्मा वा अरे द्रष्टव्यः इत्याकारकः, "भेदव्यपदेशश्च उपाध्युद्भवमपेक्ष्य घटाकाशमहाकाशवदुपपद्यते" इति वैयासिकन्यायमालायामुक्तम्। अत्र घटाकाशमहाकाशपदाभ्यां जीवपरमात्मानावुपमिताविति सर्वविदितम्। तथा च यावत् जीवभावो नापगतः तावदात्मशब्दस्य जीव इत्यर्थो दुर्निवारः विशिष्य प्रथमसोपाने दर्शने सोऽर्थः अनपास्य एव। अत एव चराचरव्यपाश्रयास्तु स्यात् तद्व्यपदेशो भोक्तुस्तद्भावभावित्वात् १६-३-२ इत्यत्र "जीवस्य जन्ममरणे वपुषो वात्मनो हिते" इति श्लोकार्थेन वैयासिकन्यायमालायां जीवार्थे आत्मपदं प्रयुक्तम् किं च वैश्वानरः साधारणशब्दविशेषात् २५-२-१ इत्यत्रात्मशब्दस्य जीवे रूढत्वात् जीवो वैश्वानरः स्यात् इति पूर्वपक्षमुपन्यस्य वैश्वानरशब्दस्तु योगवृत्त्या ब्रह्मणि वर्तते इत्युक्तं वैयासिकन्यायमालायाम्। रूढिर्योगात् बलीयसीति शास्त्रविदो जानन्त्येव। किञ्च "क्षेत्रज्ञ आत्मा पुरुषः प्रधानं प्रकृतिः स्त्रियाम् इत्यमरकोशः आत्मशब्दार्थं व्याचष्टे। "आत्मशब्दश्च जीववत् ब्रह्मण्यपि वर्तते इति चोक्तम्। तथा च मुख्यतया जीवे जीवब्रह्मैक्यहेतोश्च ब्रह्मण्यपि प्रयुज्यमानो दृश्यते तस्मात् जीवत्वमनूद्य ब्रह्मत्वं प्रतिपाद्यते इति वचनं

सर्वथा समञ्जसम्। "एक आत्मनः शरीरे भावात्" "व्यतिरेकस्तद्भावाभावित्वान्नतूपलब्धिवत्" ५३, ५४,३-३ इत्यत्र यद्विमृष्टं तदनुसारेणात्मनो देहादिव्यतिरिक्ततया दर्शनम्" आत्मनस्तुकामाय सर्वं प्रियं भवति" इति परमप्रेमास्पदत्वेन, तस्याभिज्ञानमेवात्मदर्शनं भवति। ईदृगात्म-दर्शनं विना आत्मनो ब्रह्मणो वा कथा मिथ्याजल्पितप्राया स्यात्। एतच्च सूक्ष्मबुद्धिभिः सुधीभिरनीर्ष्यालुभिरवधेयम्।

द्वितीयमुण्डके द्वितीयखण्डे" आविः सन्निहितं गुहाचरं नाम महत्पदमत्रैतत् समर्पितम् एजत् प्राणन्निमिषच्च यदेतज्जानथ सदसद्वरेण्यं परं विज्ञानात् यद्वरिष्ठं प्रजानाम्" इत्यत्र गुहाचरं नाम गुहायां चरतीति दर्शनश्रवणादि-प्रकारैः गुहाचरमिति प्रख्यातमिति शङ्करभाष्यम्। गुहाचरमित्याकारक-मात्मदर्शनं यदि ब्रह्मात्मैक्यदर्शनात् न पूर्वभावि स्यात् तर्हि श्रवणपदात् पूर्वं दर्शनपदं कुतः प्रयुक्तं शङ्करभगवत्पादैः? किञ्चायमेव प्रसङ्गः माण्डूक्योपनिषद्भाष्ये एवमुक्तः, "अयमिति चतुष्पात्त्वेन प्रविभज्यमानं प्रत्यगात्मतयाभिनयेन निर्दिशति" "अयमात्मा ब्रह्म" इति वेदान्तवाक्ये आत्मपदेन प्रत्यगात्मा विवक्षितः। गुहाचरस्य तस्य ब्रह्मत्वं प्रतिपाद्यते। "आत्मा वा अरे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्यः" इत्यनेन वाक्येन यदि चात्मदर्शनं नाम परमप्रयोजनं वयमवक्ष्याम तर्हि पतिता अभविष्यामापसिद्धान्ताध्वनि। यच्चोक्तमाचार्यपादैः माण्डूक्योपनिषदि "जागरित स्थानो बहिः प्रज्ञः सप्ताङ्गएकोनविंशतिमुखः स्थूलभुक् वैश्वानरः प्रथमः पादः" इत्यत्र "अन्यथा हि स्वदेशपरिच्छिन्न एव प्रत्यगात्मा संख्यादिभिरिव दृष्टः स्यात्। तथा च सत्यद्वैतमिति श्रुति-कृतो विशेषो न स्यात्। सांख्यादिदर्शनेनाविशेषात्। इष्यते च सर्वो-पनिषदां सर्वात्मैक्यप्रतिपादकत्वम्। अतो युक्तमेवास्याध्यात्मिकस्य पिण्डात्मनः द्युलोकाद्यङ्गत्वेन विराडात्मनाधिदैविके नैकत्वमभिप्रेत्य सप्ताङ्गत्ववचनम् इति"।

वाक्यान्वयात् इत्याधिकरणे तत्रभवन्तः अन्नंभट्टाः एवमवोचन् "जिवपरमात्मनोः भेदाभेदमतेन प्रथमसमाधानम्, मुक्तेः प्राक् भेदः तद-

नन्तरमभेदः इतिमतेन द्वितीयम्, सिद्धान्तेन तृतीयमिति विवेकः "इति। सर्वथा आत्मा वा अरे द्रष्टव्य इत्यत्र जिवोपक्रमो न दुष्यतीतिवस्तुगतिः अनेन निरुपद्रवा जाता।

योऽन्तस्सुखोऽन्तरारामः तथान्तर्ज्योतिरेव यः

स योगी ब्रह्मनिर्वाणं ब्रह्मभूतोऽधिगच्छति २४ तमश्लोकः पञ्चमाध्याये भगवद्गीतायाम्। अन्तराराम इत्यस्यार्थः प्रत्यगात्मनि रममाणः इति विवृतम् भगवद्गीतातात्पर्यदीपिकायाम्, आत्मदर्शनद्वारैव तदेतत् साध्यते इति निश्चयः।

श्रीमच्छङ्करभगवत्पादरचिते आत्मज्ञानोपदेशविधिप्रकरणे उक्तं खलु- "प्रत्यगात्मनि प्रत्यगात्मचैतन्यवज्जातोभयात्मिका बुद्धिः द्रष्टृ दृश्याकारा विपरिणमते, तत्र प्रत्यगात्मेति कस्मादात्मा विशिष्यते। व्यभिचारिणामनात्मत्वख्यापनार्थम्"इति। एतदेव महदालम्बनमस्माकमात्मदर्शनव्याख्यानावसरे। देहेन्द्रियप्राणसंघाते एकस्मिन्नन्यस्मिन्वा आत्माभिमानं वहन्ती बुद्धिः झटिति 'अयमात्मा ब्रह्म, सर्वं खल्विदं ब्रह्म' इति श्रुतिवाक्ये यथार्थतो नावगच्छेत्। अतश्च व्यभिचारिणामनात्मत्वनिश्चयपूर्वकं प्रत्यगात्मावबोधः प्रप्रथममावश्यको भवति। तस्माद्धेतोस्तस्य प्रथम सोपानत्वमस्माभिरभिहितम्।

श्रीमद्भागवते महापुराणे पारमहंस्यां संहितायां तृतीयस्कन्धे षड्विंशेऽध्याये कापिलेयस्तत्वसमाम्नायो वर्णितः। तत्र

बुद्ध्या ब्रह्मापि हृदयं नोदतिष्ठत्तदाविराट्।
रुद्रोऽभिमत्या हृदयं नोदतिष्ठत्तदाविराट्॥

इति पर्यन्तं सर्वदेवताप्रवेशे सत्यपिविराट्पुरुषस्यानुत्थानमभिहितम्। अन्ततो गत्वा

"चित्तेन हृदयं चैत्यः
क्षेत्रज्ञः प्राविशद्यदा

विराट् तदैव पुरुषः
सलिलादुदतिष्ठत "इत्युक्तम् ।

तस्मात् क्षेत्रज्ञस्य प्राधान्यं सर्वथा न निरस्यते । श्रीमच्छङ्कराचार्यविरचिते प्रकरणग्रन्थे अपरोक्षानुभूतौ चेदमुक्तम् । तथाहिः–

श्लो॰ नाहं भूतगणो देहो नाहं चाक्षगणस्तथा ।
एतद्विलक्षणः कश्चत् विचारस्सोऽयमीदृशः ॥

श्लो॰ आत्मा विनिष्पलो ह्येको देहो बहुभिरावृतः
तयोरैक्यं प्रपश्यन्ति किमज्ञानमतः परम् ॥

श्लो॰ आत्मा नियामकश्चान्तर्देहो वाह्यो नियामकः
तयोरैक्यं प्रपश्यन्ति किमज्ञानमतःपरम् ॥

श्लो॰ आत्मा ज्ञानमयः पुण्यो देहो मासंमयोऽशुचिः
तयोरैक्यं प्रपश्यन्ति किमज्ञानमतःपरम् ॥

श्लो॰ आत्मा प्रकाशकः स्वच्छो देहस्तामस उच्चते
तयोरैक्यं प्रपश्यन्ति किमज्ञानमतःपरम् ॥

श्लो॰ आत्मा नित्यो हि सद्रूपो देहो नित्योह्यसन्मयः
तयोरैक्यं प्रपश्यन्ति किमज्ञानमतःपरम् ॥

श्लो॰ अहं शब्देन विज्ञात एक एव स्थितः परः ।
स्थूलस्त्वनेकतां प्राप्तः कथं स्यात् देहकः पुमान् ।

श्लो॰ प्रोक्तोऽपि कर्मकाण्डेन ह्यात्मा देहाद्विलक्षणः ।
नित्यश्च तत्फलं भुंक्ते देहपातादनन्तरम् ॥

श्लो॰ लिंगं चानेकसंयुक्तं चलं दृश्यं विकारि च ।
अव्यापकमसद्रूपं तत्कथं स्यात् पुमानयम् ॥

श्लो॰ एवं देहद्वयादन्य आत्मा पुरुष ईश्वरः ।
सर्वात्मा सर्वरूपश्च सर्वातीतोऽहमव्ययः". ॥

इत्यन्तंदेदाद्वि सोपानभूतलक्षणतया आत्मनो ज्ञानमेव प्रथमसोपानभूत-मात्मदर्शनम् । ततः परम्

श्लो· इत्यात्मदेहभेदेन देहात्मत्वं निवारितम् ।
इदानीं देहभेदस्य ह्यसत्वं स्फुटमुच्यते ॥

श्लो· व्याप्यव्यापकतया मिथ्या सर्वमात्मेति शासनात् ।
इति ज्ञाते परे तत्त्वे भेदस्यावसरः कुतः ॥

श्लो· ब्रह्मणस्सर्वभूतानि जायन्ते परमात्मनः ।
तस्मादेतानि ब्रह्मैव भवन्तीत्यवधारयेत् ॥

श्लो· अयमात्मा हि ब्रह्मैव सर्वात्मकतया स्थितः ।
इति निर्धारितं श्रुत्या बृहदारण्यसंस्थया ॥

श्लो· यथैव मृण्मयः कुम्भः तद्वद्देहोऽपि चिन्मयः ।
आत्मानात्मविभागोऽयं मुधैव क्रियते बुधैः ॥

इत्यादिकैः श्लोकैः ब्रह्मात्मैक्यं प्रतिपादितम् विस्पष्टतया चात्र अध्यारोपा-पवादाभ्यां निष्प्रपञ्चं प्रपञ्च्यते इति सरणिमाश्रित्य देहादीनामध्यस्ता-नां निषेधः, निषेधशेषस्य चाशेषत्वं विशदीकृतम् । अस्मिन् प्रसङ्गे च प्रप्रथमं देहादिभिन्नतया जीवात्माभिज्ञानं प्रदर्शितम्, ततः पश्चादेव आत्मनो ब्रह्माभिन्नतया सर्वात्मकत्वं च निरूपितम् । प्रस्फुटश्चायं विषयः ४१ तमश्लोके अपरोक्षानुभूतौ । तस्मात् यथा यथा चिन्त्यते तथा तथा न वयं सिद्धान्तपरिभ्रष्टाः स्मः ।

निदिध्यासनं नाम मानसीक्रियेति कृत्वा निष्क्रियब्रह्मात्मैक्य-साक्षात्काराय शब्द एवोपादीयते यैः तद्द्वाराच श्रवणस्य प्राधान्य-माविष्क्रियते तान् प्रति शब्दपरोक्षज्ञानजनकत्वप्रस्ताव एव समा-धानम् । दर्शनश्रवणमनननिदिध्यासनानामवगत्यर्थंकतया एकरूपत्वं भाष्यकारैः निर्णीतम् । यं प्रति सकृदुक्तम् तत्त्वमसीति वाक्यं ब्रह्मात्मैक्यसाक्षात्कारं जनयति तं प्रति तु शब्दस्यापरोक्षज्ञानजनकत्व-

मभ्युपेतम् । अन्येषां विषये साधनानामावश्यकता, तेषां च अन्तिमोपायः सर्वोत्तम इति निश्चप्रचम् । अयं च निवन्ध आत्मदर्शनाख्यः पञ्चमविश्व-संस्कृतसम्मेलने अक्टोबरमासे 1981 तम क्रीस्ताब्दे वाराणस्यां हिन्दूविश्व-विद्यालये विदुषामभिमतिमनुमोदनं चाधिगतः ।

गमनिका :— एतद्विषयस्य विवेकाय ग्रन्थसङ्गतये च श्रवणविधि निबन्धं शब्दस्यापरोक्षज्ञानजनकत्वविषयकं निबन्धं चास्मिन् विमर्शानु-सन्धाननिबन्धग्रन्थे सुधियः पठन्तु परिशीलयन्तु च"



# श्र व ण वि धिः

ननु विचार्यते श्रवणविधेः कोऽर्थः किमर्थं चोपादीयते श्रवणविधिरिति। उच्यते खलु, जिज्ञासा सूत्रस्य मूलभूतं श्रुतिवाक्यम् "आत्मा वा अरे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्यः" इति। तत्र श्रोतव्यपदेन श्रवणं विधीयते यस्यार्थः वेदान्तवाक्यानामद्वितीये ब्रह्मणि तात्पर्यनिर्णयानुकूलो न्यायविचारः इति शङ्करभाष्यव्याख्यानुरोधेन वर्णितं तत्रभवता अन्नम्भट्टेन ब्रह्मसूत्रवृत्तौ स्वकृतायां मिताक्षरायाम्।

अत्रास्माकमयमाशयः :— जिज्ञासासूत्रस्य मूलमूतं श्रुतिवाक्यं तैत्तिरीयके "तद्विजिज्ञासस्व तद् ब्रह्म" इत्याकारकमेव गृह्यतामिति। साक्षात् जिज्ञासस्वेति वेदवाक्यबलेन सूत्रेऽपि जिज्ञासापदस्य सत्वाच्च जिज्ञासाविधिः वक्तुं सुशकः इत्येको हेतुः। जिज्ञासासूत्रभाष्ये श्रुत्यनुगमाच्च इत्युदीर्य भगवत्पादैः इदमेव वेदवाक्यमुदाहृतमित द्वितीयो हेतुः। जिज्ञासाधिकरणे भगवत्पादैः "आत्मा वा अरे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्यः" इत्याकारकं वेदवाक्यं सूत्रस्य मूलभूतत्वेन न वर्णितमिति तृतीयो हेतुः। हेतुत्रयेण च जिज्ञासासूत्रस्य मूलभूतं श्रुतिवाक्यं "तद् विजिज्ञासस्व तद् ब्रह्म" इत्याकारकमिति वयमवोचाम।

अस्तु। को नाम तावता लाभस्सम्पादितः इति प्रश्ने, अस्माभिरुच्यते :– लोके यथा "शुश्रूषस्व गुरून्", "गुरुशुश्रूषया विद्या" इत्यादौ शुश्रूषशब्दस्य सेवायां लक्षणा, तथा जिज्ञासापदस्य विचारे लक्षणा स्यात्: अस्तु। ततः किं सिद्धम्? ब्रह्मजिज्ञासापदस्य ब्रह्मविचारः इत्यर्थः सिद्धः। "ब्रह्म च यतो वा इमानि भूतानि जायन्ते येन जातानि जीवन्ति यत् प्रयन्त्यभिसंविशन्ति" इति वेदेनैव लक्षितम्। ब्रह्मणः केवलं तादृश-

ज्ञानं तु परोक्षमेव भवति यन्नापेक्षितं साध्यतया। तस्मात् ब्रह्मशब्दस्य विवरणाय "अयमात्मा ब्रह्म सर्वानुभूः" इत्याकारकं वेदवाक्यं स्मरणीयम्। एतद्वाक्यस्थस्यात्मनो जिज्ञासायां", आत्मनस्तु कामाय सर्वं प्रियं भवति" इति बृहदारण्यकोपनिषद्वाक्यमादरणीयं भवति। तादृक् परमप्रेमास्पद-स्यात्मनः अभिलक्षणमभिज्ञानं देहेन्द्रियविलक्षणत्वेनात्मा वा वरे द्रष्टव्यः इति वाक्येनोच्यते। "अयमात्मा परानन्दः परप्रेमास्पदं यतः मानभूवं हि भूयासमिति प्रेमात्मनीक्ष्यते, तत् प्रेमात्मार्थमन्यत्र नैवमन्यार्थमात्मनि अतस्तत्परमं, तेन परानन्दात्मतात्मनः, इत्थं सच्चित्परानन्द आत्मा" इति पर्यन्तं पञ्चदश्यामपि यदात्मदर्शनमुक्तं प्रथमसोपानं तद् द्रष्टव्यपद-विवरणमात्रम्। दर्शनमात्रं त्वत्रापातज्ञानमित्यवगन्तव्यं यत् खल्वात्मनस्तु कामाय सर्वं प्रियं भवतीति परमप्रेमस्वरूपत्वज्ञानं यद्विना विचार एवानुप-पन्नः स्यात्। परमप्रेमस्वरूपोऽयमात्मा वस्तुतः भिन्नः उत सर्वात्मा इति जिज्ञासुः गुरुमुपेयान्मुमुक्षुः। गुरुमुखाच्च अयमात्मा ब्रह्म सर्वानुभूः तत्त्वमसीत्यादिश्रुत्वा विचारयति ब्रह्मात्मैक्यं वेदान्तवाक्यपर्यालोचनेन साकम्। एवं श्रोतव्यपदस्य श्रवणविध्यर्थः यस्यार्थः न केवलमात्मदर्शनं न वा ब्रह्मज्ञानं किन्तु ब्रह्मात्मैक्यनिर्णयानुकूलो न्यायविचारः वेदान्तवाक्या-नुरोधेनेति पर्यवस्यति। इयं चोपपादनरीतिः सूत्रभाष्यतात्पर्यानुरोधिन्येव। तस्मात् जिज्ञासासूत्रस्य "तद् विजिज्ञासस्व तद् ब्रह्म" इति वाक्यं यद्यपि मूलभूतं तथापि "अयमात्मा ब्रह्म सर्वानुभूः" इति वाक्योक्तब्रह्मा-त्मैक्यचिन्तनमेव तस्यार्थः यो हि श्रवणपदेनानूद्यते। तथा च श्रवण-पदस्य विचार एवार्थः यो हि जिज्ञासापदस्य लक्ष्यार्थः।

जिज्ञासापदे च प्रकृतावजहल्लक्षणा, सन् प्रत्यये च जहल्लक्षणेति विवरणानुसारिणः। तन्मतमालम्ब्यास्माभिरिदमुच्यते :—

'अथातो ब्रह्मजिज्ञासे' तिसूत्रेण ब्रह्मकर्मकज्ञानेच्छाकृतयः अभिप्रेताः। निरतिशयप्रेमस्वरूपस्यात्मनः ज्ञानं दर्शनपदवाच्यं ज्ञाधातोः वाच्यार्थः। अजहल्लक्षणया च साध्यावस्थम् "अयमात्मा ब्रह्म" इति श्रुतिवाक्यो-पदिष्टं ज्ञानं लक्ष्यते। लक्ष्यार्थे साध्ये ब्रह्मात्मैक्यज्ञाने निरतिशयप्रेम-

स्वरूपात्मज्ञानस्यान्तर्भावात् अजहल्लक्षणा घटते। आत्मदर्शनमित्यापातज्ञानं सामान्याकारं विना ब्रह्मजिज्ञासाया अनुदयात्, अन्तर्भावितवाच्यार्थात्मदर्शनं लक्ष्यार्थं ब्रह्मात्मैक्यदर्शनं साध्यमुद्दिश्य ब्रह्मजिज्ञासा प्रवर्तते। तादृग्ज्ञानसम्पादनाय मुमुक्षोः तीव्रेच्छा सन्प्रत्ययोनोच्यते। ज्ञानेच्छयोः सत्वे कृतिः स्यादिति विचारः कृतिरूपः जहल्लक्षणया लक्ष्यते। ततश्च तादृग्विचारः कर्तव्यः इति विधेयत्वार्थं कर्तव्येतिपदमध्याहर्तव्यम्। यदि च सूत्रं अथातो ब्रह्मविचारः इति स्यात् तर्हि प्रवृत्तितः इच्छाया उपलब्धेः ब्रह्मज्ञानेच्छायां लक्षणा अनावश्यकी भवेत्। अत्र तु न तथेति लक्षणा अवश्यम्भविनी। एवं वीनवप्रकारोद्भावनेन भामतीमतापेक्षया विवरणमतं वरीयः इत्यस्माकमाशयः उपपादितो भवति।

अपि च "मैत्रेय्यात्मनो वा अरे दर्शनेन श्रवणेन मत्या विज्ञानेनेदं सर्वं विदितम्" २-४-४ इति बृहदारण्यकोपनिषद्वाक्यपर्यालोचने दर्शनश्रवणमनननिदिध्यासनानि अपरोक्षज्ञानं प्रति क्रमसोपानानीति प्रतीयते। चतुर्णां साधनानां फलसिद्धौ सम्यग्दर्शनं यदा जायते तदा सर्वमिदं विदितं भवति। "यदैकत्वमेतान्युपगतानि तदा सम्यग्दर्शनं ब्रह्मात्मैक्यविषयं प्रसीदति नान्यथा श्रवणमात्रेण" इति शङ्करभाष्यं चैतदनुकूलम् यदि च दर्शनमेव लक्ष्मन्तिमं स्यात् ततः परं क्रमेण श्रवणमनननिदिध्यासनानामभिधानमनुचितमापद्येत। श्रुतिहृदयं चानाकलय्य पाठक्रमादर्थक्रमो बलीयानिति दर्शनपदस्य पश्चान्नयनं च नास्मभ्यं रोचते। सर्वत्र भाष्ये आत्मदर्शनं यदुक्तं साध्यत्वेन, तत् सम्यग्दर्शनाभिप्रायेणेत्यवगन्तव्यम्।" एवं ह्यसौ दृष्टो भवति श्रवणमनननिदिध्यासनैः निर्वर्तितैः" इत्यादौ दृष्टशब्दस्य सम्यग्दर्शनमर्थः न तु प्रथमसोपान भूतमात्मज्ञानम्, पूर्वोक्तसम्यग्दर्शनस्य चास्य विरोधासम्भवात्। वाक्यान्वयात् १-४-१९ इति सूत्रादारभ्य "आत्मा वा अरे द्रष्टव्यः" इत्यादिवाक्यस्य ब्रह्मणि तात्पर्यवत्त्वमुपपादितम्। तथापि उपक्रमे जीवात्मभिज्ञानं न दुष्यति, अन्ते काशकृत्स्नमतेन ब्रह्मणि तात्पर्यं स्यादेव। "युक्त्या तथाविधं ब्रह्म मतयोश्चैक्यं श्रुत्यन्तेषूपदिश्यते" इति पञ्चदशी च पूर्वोक्तरीत्या प्रकारमेनं समनु

गृह्णाति । किं च समन्वयाधिकरणे "यो हि बहिर्मुखः प्रवर्तते पुरुषः...... प्रत्यगात्मस्रोतस्तया प्रवर्तयन्ति आत्मा वा अरे द्रष्टव्यः इत्यादीनि" इति भाष्यं च अस्मदुक्तरीतिं कटाक्षयतीति नास्मन्मतं भाष्यविरुद्धम् ।

वस्तुतस्तु दर्शनपदवाच्यं ज्ञानमेव श्रवणमनननिदिध्यासनेषु क्रमपरिणामेनु पूर्णतामुपगच्छति । सम्यग्दर्शनमुद्दिश्य च दर्शनश्रवणमनननिदिध्यासनानि साधनानि भवन्ति । तस्मात् चतुर्णामेषामङ्गत्वमुपपन्नम् । " ते ध्यानयोगानुगता अपश्यन्" इति श्रुत्यन्तरे ध्यानयोगेन निदिध्यासनमुक्तमित्यवगन्तव्यम् । "प्रकृते तु श्रवणं न कस्यचित् प्रकृतिः येन मनननिदिध्यासनयोः तत्रानुष्ठानमङ्गत्वविचारफलं भवेत् । तस्मान्न तार्तीयशेषत्वं मनननिदिध्यासनयोः" इति वेदान्तपरिभाषायां सम्यग्वर्णितम् । किन्तु किन्तु इत्यारभ्य "मृत्पिण्डादीनां प्राधानकारणता चक्रादीनां सहकारिकारणतेति प्राधान्याप्राधान्यव्यपदेशः । तथा श्रवणमनननिदिध्यासनानामपीति मन्तव्म्", इति यदुक्तं तन्नसमञ्जसं प्रतिभाति । सम्यक् दर्शनं प्रति श्रवणमनननिदिध्यासनानां दर्शनेन साकं सहकारिकारणत्वमेव समीचीनमस्मन्मते । चक्रादिसहकारीणि मृत्पिण्डघटभावमानयन्ति मृत्पिण्डस्थाने दर्शनं तावदिष्यतां, यद्विना अन्यसाधनानि नैव कार्यं साधयन्ति । ततश्च श्रवणमनननिदिध्यासनानि दर्शनस्य सम्यग्दर्शनतामापादयन्ति यथा मृत्पिण्डं घटभावमापादयन्ति चक्रादीनि । सूचितं चैतत् विवरणाचार्यैः इत्युपक्रम्य यल्लिखितं तत्र विवरणमते श्रवणं प्रति मनननिदिध्यासने अङ्गे अङ्गीक्रियेते इति तत् पुनः स्वमतविरुद्धमिति धर्मराजाध्वरीन्द्रेण जानतापि कृतो विवरणमतानुवादः तस्य तन्मते पूज्यभावं व्यनक्ति । तथा च "प्रमाणस्य प्रमेयावगमं प्रत्यव्यवधानात् शक्तितात्पर्यविशिष्टशब्दावधारणं प्रमेयावगमं प्रत्यव्यवधानेन कारणं भवति" इति वचनेन अप्रमेयं परमात्मस्वरूपं शब्दशक्तितात्पर्यगम्यं कुर्वन्तीति स्पष्टं भवति । यदि तादृशप्रमेयावगम एव परमोद्देश्यं भवेत् तर्हि श्रोतव्यइति पदेन ज्ञानविधिस्वीकारः अङ्गीकृतः भवेत् यः भाष्यसम्मतो न भवति । अग्रे च "शक्तितात्पर्यविशिष्टशब्दावधारणस्य व्यवहिते मनन-

निदिध्यासने (श्रवणं प्रति) तदङ्गे अङ्गीक्रियेते" इति वचनं शक्ति-तात्पर्यविशिष्टशब्दावधारणस्य प्राधान्यकथनं च कथमुचिते इति न प्रतीमः तस्मिन्नेव सन्दर्भे मनननिदिध्यासनयोः "ब्रह्मानुभवहेतुतां प्रतिपद्येते" इति वचनं यद्यपि विद्यते तथापि श्रवणं प्रत्येव तदितरयोः अङ्गत्वं कथ-मुक्तमिति विमृश्यम् । मनननिदिध्यासने बलादाकृष्य ब्रह्मणः, श्रवण-पदाभिप्रेतशक्तितात्पर्यव्युत्पत्तिपरिशीलनव्यग्रे कुतो वा क्रियेते इति सुधीभिः विचारणीयम् । तन्मतानुरोधेन दर्शनं प्रति साधनत्वं गतं श्रवणमुद्दिश्य मनननिदिध्यासनयोरङ्गभावः, कथं साधीयानिति विचारविषयः ।

श्रुतिलिङ्गवाक्यप्रकरणस्थानसमाख्याभिः श्रवणं प्रति मनननिदिध्या-सनयोः अङ्गत्वं न स्यादिति धर्मराजाध्वरीन्द्रेण सम्यक् प्रतिपादितम् "ते ध्यानयोगानुगता अपश्यन्" इति वेदान्तवचनमादाय निदिध्यासनं प्रति श्रवणमननयोः अङ्गतापत्तेः" इति वेदान्तपरिभाषायां यदुक्तं तदस्म न्मननमार्गगामि पथ्यं वचः सञ्जायते । आपत्तिरेषा न स्यात् उपपत्तिरेव भवेत् सम्यग्दर्शनस्य सामीप्यात् । इयं च दिशा धर्मराजाध्वरीन्द्रेण स्पृष्टपरित्यक्ता दृश्यते ।

अधुना प्रश्नत्रयमस्माभिरप्युत्थाप्यते :—

1) श्रवणं प्रति मनननिदिध्यासनयोः अङ्गत्वबोधकं प्रमाणं यथा नास्ति, तथा दर्शनं प्रति श्रवणमनननिदिध्यासनानामङ्गत्वे किं प्रमाणमस्ति ?

2) "नापि प्रदेशान्तरपठितस्य प्रवर्गस्याग्निष्टोमे प्रवृणक्ति वाक्य-वत् श्रवणानुवादेन मनननिदिध्यासनविनियोजकं किञ्चित् वाक्यमस्ति" इति यथोक्तं तथैवास्माभिरपि "दर्शनानुवादेन श्रवणमनननिदिध्यासन-विनियोजकं न किञ्चित् वाक्यमस्ति" इति प्रोच्यते चेत् किमुत्तरम् ?

3) निदिध्यासनं च ब्रह्मसाक्षात्कारे साक्षात् कारणमिति स्वयं स्पष्टमुदीर्यापि तस्याङ्गत्वेन दर्शनश्रवणमननानां कथनमपहाय निदिध्यासने मननं हेतुः मनने श्रवणमिति यदा प्रोच्यते तदा

श्रवणे दर्शनं हेतुरिति वचनं कुतो दुष्यति ?

अस्मत्पक्षे तु "मैत्रेयि आत्मनो वा अरे दर्शनेन श्रवणेन मत्या विज्ञानेन इदं सर्वं विदितं भवति" इति श्रुतिवाक्यमेव चतुर्णां तृतीया-विभक्त्या करणत्वं ब्रूते। एतत्पूर्वापरवाक्यपर्यालोचनेन प्रकर-णानुरोधेन चात्मदर्शनं प्रथमसोपानम्।

ततः परं श्रोतव्य इति चोदितश्च श्रवणविधिरपूर्वविधिः किं न स्यादिति विचारयामस्तावत्। प्रकटार्थकारादयः श्रवणविधिमपूर्वविधिं कलयन्ति। तथाहि :... "त्वं त्वौपनिषदं पुरुषं पृच्छामि" नावेदविन्मनुते तं बृहन्तम्" इत्यादिभिः वेदैकसमधिगम्यत्वं परब्रह्मणः विस्पष्टम्। तस्मात् मानान्तरावेद्यत्वरूपापूर्वाख्यलिङ्गौचित्यबलाच्च श्रोतव्य इत्यत्रापूर्वविधि-रङ्गीकार्यः इति। आपाततः अपूर्वविधिपक्षः समञ्जसः प्रतीयते, परब्रह्मणः उपनिषन्मात्रवेद्यत्वप्रतीतेः। श्रुतिवचनमपहाय ब्रह्मणो महिम्ना कुत्र वोप-लभ्यते ?। किन्त्वपुर्वविधिः अदृष्टं प्रयोजनं जनयति। श्रवणं तु दृष्ट-प्रयोजनम्। तथा च मानान्तरावेद्यत्वमपूर्वमन्यत् विधीनामन्यतमः अपूर्व-विधिरन्यः। ब्रह्मात्मैक्यविचारः लोकसिद्धः अथवा वेदचोदितः इति प्रश्ने यद्यपि वेदचोदितस्तथापि विचारस्य विचार्यविनिर्णयहेतुत्वेन ब्रह्मणः विचार्यत्वे तत्प्रमाणस्य ब्रह्मविचारस्य ब्रह्मसाक्षात्कारहेतुत्वे सिद्धे, श्रवणस्य तादृग्विचाररूपस्य लोकसिद्धत्वात् दृष्टप्रयोजनत्वात् अपूर्वविधित्वं नाङ्गी-क्रियते। अयं च विषयः सिद्धान्तलेशसंग्रहे यथा अनूद्य प्रपञ्चितः तथा अन्नम्भट्टेन वाक्यमेकं समानानुपुर्वीकं विरच्य संक्षेपेणापूर्वविधिनिरासः कृतः। तच्च वाक्यम्" विचारोऽपि विचार्यविनिर्णयहेतुत्वेन लोकसिद्ध" इत्याकारकम् जिज्ञासाधिकरणे।

श्रवणादीनामवघातादीनामिव नियमविधित्वं सम्भवतीति विवरणानु-यायिनः। अवघातादिभिः साम्यवचनाच्च नियमविधिः निराक्षेपः। अपि च सहकार्यन्तरविधिः पक्षेण तृतीयं तद्वतो विध्यादिवत् ३-४-४७ इति सूत्रस्य भाष्ये "विद्यासहकारिणो मौनस्य बाल्यपाण्डित्यवत् विधिरेवा-श्रयितव्यः अपूर्वत्वात्" इत्युक्तम्। अपूर्वत्वादिति वचनमादाय प्रकटार्थ-

कारादयः श्रवणस्यापूर्वविधित्वमभ्युपागच्छन् । तथापि अन्ततो गत्वा "एतदुक्तं भवति यस्मिन् पक्षे भेददर्शनप्राबल्यात् न प्राप्नोति तस्मिन्नेष विधिरिति" इति समाहितम् । सूत्रेण च स्पष्टमुदीरितं पक्षेणेति । ततश्च श्रवणस्य नियमविधित्वं कटाक्षितं भगवत्पादैरिति स्फुटम् । इदमेव च निदानं विवरणकाराणां तदनुयायिनां च नियमविध्यङ्गीकारस्येति प्रपञ्चितं सिद्धान्तलेशसंग्रहे । अन्नम्भट्टेन तत्रभवता तन्मतं मिताक्षरैः अनूदितञ्च ।

समन्वयसूत्रभाष्ये चात्मज्ञानविधिं निराकृत्य प्रश्न उत्थापितः "किमर्थानि तर्हि आत्मा वा अरे द्रष्टव्यः श्रोतव्यः इत्यादीनि विधिच्छायानि वचनानि" इति । समाहितश्च "स्वाभाविकप्रवृत्तिविषयविमुखीकरणार्थानीति ब्रूमः" इत्यादिना । "स्वाभाविकात् कार्यकरणसंघातप्रवृत्तिगोचरात् विमुखीकृत्य" इति वचनेन नियमविधित्वं कटाक्षितम् । सर्वमेतदालोच्य तत्रभवता अन्नम्भट्टेन जिज्ञासासूत्रवृत्तौ "भगवत्पादैः आत्मज्ञानविधिर्निराकृतः न तु ज्ञानोद्देशेन विचारविधिरिति न तद्विरोधोऽपीति तस्मात् विचारविधौ न किञ्चित् बाधकम्", इति सम्यगुपपादितम् किन्तु विवरणानुसारिमतनिरूपणानन्तरं वाचस्पतिमिश्रानुयायिमतमप्युपवर्णयता, यदुपपादितं तत् खण्डितं तत्रभवतान्नम्भट्टेन । यथामति वयं चास्मिन् विषये मिताक्षरानूदितविवरणानुयायिवाचस्पतिमिश्रानुसारिमतद्वयतारतम्यपरिशीलनं प्रस्तुमः :—

1 अथातो धर्मजिज्ञासा इत्युपक्रान्तायां पूर्वमीमांसायां जिज्ञासाशब्दस्य विचारे लक्षणा अभिहिता । अस्य च सूत्रस्य 2. स्वाध्यायोऽध्येतव्यः इति वेदवाक्यमूलकत्वमभिहतम्; तत्र फलपदस्य अश्रवणात् समभिव्याहृतः स्वाध्यायः कर्मभूतएव भाव्यत्वेन सम्बध्यते । तस्य फलवदर्थावबोधपर्यन्तत्वाभावे भाव्यतानुपपत्त्या फलवदर्थावबोधपर्यवसायित्वमापतति । अर्थनिर्णयमन्तरेण च फलवदर्थावबोधस्यासम्भवेन अर्थनिर्णयहेतुविचारकर्तव्यतामपि अध्ययनविधिराक्षिपति । तस्मात् कर्तव्येति पदमध्याह्रियते

नियमविधिश्चाङ्गीक्रियते । तथैवोत्तरमीमांसायां अथातो ब्रह्म जिज्ञासा इति सूत्रस्य विषयेऽपि कर्तव्येति पदमध्याहर्तव्यम् । विचारे लक्षणापि भवति नियमविधिश्चाभ्युपगन्तव्यः । तद् विजिज्ञासस्व तद् ब्रह्म इति श्रुतिवाक्यं च मूलमङ्गीकर्तव्यम् । उभयोरपि मीमांसयोः श्रुतिप्राधान्यावलम्बनात् धर्मब्रह्मविचारविषयत्वाच्च ।

एक आत्मनः शरीरे भावात् ३-३-५७ इति सूत्रस्य भाष्ये च भगवत्पादैः प्रथमतन्त्रस्योत्तरतन्त्रस्य चैकमत्यमेकशास्त्रत्वं वा समुपवर्णितम् । तस्मादनुरूपसूत्रारम्भे सति तदनुगुणतया नियमविधेराश्रयो वरीयान्। "यतो वा इमानि भूतानि जायन्ते" इत्याद्याः श्रुतयः तद् विजिज्ञासस्व तद् ब्रह्म इति प्रत्यक्षमेव ब्रह्मणो जिज्ञसाकर्मत्वं दर्शयन्तीति शङ्करभाष्यमालोक्यते चेत् "सर्वत्र श्रुतिसूत्रयोरैकरूप्यस्यामानकत्वात्" इति यदुक्तं तदसङ्गतमेव प्रतीयते विशेषतो यत्र श्रुतिसूत्रयोः समानानुपूर्वकत्वमक्षरत्रये विद्यते तत्रापि प्रथमत एव निरासस्यानुदयात् ।

2. वाचस्पतिमिश्रानुयायिभिः परिसंख्याविधिर्निराकृतः श्रवणस्य तद्विषये नियमविधिमङ्गीकुर्वतां विवरणानुयायिनां मौनं समीचीनमेव ।

3. आत्मसामान्यत्वेन यजमानस्यात्मविचारं प्रस्तुत्य कर्मविधिविचारं पूर्वपक्षत्वेनोपक्षिप्य तत्खण्डनं साधु विहितं वाचस्पतिमतानुयायिभिः ।

4. किं च नियमविधिप्रत्याख्यानावसरे गुरूपसदनमनिवार्यतयावश्यकमिति प्रतिपादितं "स्वतन्त्रविचारव्यावृत्तेः उपगमनविधिनैव सिद्धत्वात्" इति वाक्येन मिश्रानुयायिभिः । एतच्च प्रशस्यम् । किन्तु गुरुरहितविचारस्य व्यावर्त्यत्वेन, ये नियमविधिं नाङ्गीकुर्वन्ति तैः न सम्यग् विमृष्टम् । बृहदारण्यकभाष्ये भगवत्पादैः श्रोतव्यः पूर्वमाचार्यतः आगमतश्च इति विवृतत्वात् श्रवणविधिः गुरूपसदनविधिं जनयति । "गुरूपसदनस्य श्रवणाङ्गतया श्रवणविध्यभावे तद्विधिरेव नास्तीति तेन तस्य वैफल्यप्रसक्तेः ।

अध्ययनाङ्गभूतोपगमनविधिनैव लिखितपाठादिव्यावृत्तिरिति अध्ययननियमोऽपि विफलः स्यात्" इति सिद्धान्तलेशसंग्रहे श्रीमदप्पयदिक्षितोक्तं

वाक्यद्वयं गुरुरहितविचारव्यावृत्तये श्रवणस्य नियमविधित्वं सम्पादयति। गुरूपसदनं विना प्रवृत्तौ, सर्वं खल्विदं ब्रह्मेत्यापातज्ञानेन यथादृष्टजगद्विचारो यः सम्भाव्यते सोऽपि व्यावर्त्यते। अत एव भाष्योक्तदिशा स्वाभाविकात् कार्यकरणसंघातप्रवृत्तिगोचरात् विमुखीकरणं पक्षप्राप्तं जगद्विचारं निषेधति नियमविधिचानुगृह्णाति। गुरूपसदनविधौ सति "आचार्यवान् पुरुषो वेद" इति श्रुतिः पुनरुक्ता स्यात् न तु श्रवणविधिः। पुनरुक्तिश्चाभ्यासदार्ढ्यार्थमिति सुवचम्। तत्वमसीति नवकृत्वोऽभ्यासः ततः परं अयमात्मा ब्रह्म, सर्वं खल्विदं ब्रह्म इत्यादिभिः स एव पुनः पुनरुक्तः इति न वेदे पुनरुक्तिदोषः।

5. गुरूपसदने सति भिन्नात्मविचारस्याप्रसक्तत्वात् भिन्नात्मविचारस्य निवर्त्यत्वेन नियमविधिं ये नाङ्गीकुर्वन्ति तान् प्रत्युच्यते गुरूपसदने सत्यपि गुरुः अधोलिखितानि श्रुतिवाक्यान्यपहाय नाध्यापयति खलुः-- ऋतं पिबन्तौ सुकृतस्य लोके—काठक १-३-२ यो विज्ञाने तिष्ठन् —बृ ३-७-२२ द्वा सुपर्णा सयुजा ---मुण्डकोपनिषत् द्व ब्रह्मणी वेदितव्ये मैत्र्यु ६-२२ अजामेकां...... श्वेताश्वतरोपनिषत्। किंच शारीरश्चोभयेऽपि हि भेदेनैनमधीयते १-२-२०, गुहां प्रविष्टावात्मानौ हि तद्दर्शनात् १-२-११ इति सूत्रे च भवतः भिन्नात्मबोधनायापाततः। अध्यापनसमये आपाततः भिन्नात्मविचारः सम्भवतीति तन्निवर्तनाय नियमविधिस्वीकारो वरीयान्। अपि च यथा मिश्रानुसारिणां मते भिन्नात्मविचारः भ्रान्तिमूलकः तथा भेदवादिनां मते अद्वितीयात्मविचारोऽपि। तथा च स्वस्वमते तदितरव्यावृत्तये नियमविधिराश्रयणीयः। 6. सूत्रे अथशब्दस्य अतश्शब्दस्य च व्याख्याने अधिकारिविवक्षायां, शान्तो दान्त उपरतः तितिक्षुः इति, तद्यथेह कर्मचितो लोकः क्षीयते एवमेवामुत्रपुण्यचितो लोकः क्षीयतेइति च वेदवाक्ये उपादानतया स्वीकृते स्तः। तर्हि जिज्ञासा- पदस्य विजिज्ञासस्वेति वेदवाक्यं मूलं यस्याभिप्रायः गुरुद्वारा श्रवणमिति कुतो नाध्यवसीयते?

7. जिज्ञासाधिकरणे अन्ततो गत्वा तत्रभवता अन्नम्भट्टेन विवरणभामतीप्रस्थानानुवादानन्तरं स्वाभिनिवेशस्यार्धं विवरणमते, अर्धं मिश्रानुसारिमते

च विभक्तम् । "अस्तु वा नियमविधिः तथापि न लक्षणाध्याहारौ" इत्यन्नम्भट्टस्याभिसन्धिः । श्रवणविधिः नियमविधिर्भवतु नाम लक्षणाध्याहारावनावश्यकाविति मिताक्षराकृन्मतम् । श्रवणस्य नियमविधित्वमर्थात् जिज्ञासाया अपि नियमविधित्वमङ्गीकृतम् । कर्तव्यताकारमध्याहारमन्तरा तस्य विधित्वमेव नास्ति विधेयत्वाभावात्, कुतो नियमविधेरवकाशः? अस्मिन्नन्नम्भट्टस्य मते यदिष्टतमं ब्रह्मज्ञानं तत् प्रयोजनम्, ब्रह्म च विषयः । विषयप्रयोजनप्रतिपादनपरे एतस्मिन् सूत्रे इष्यमाणं ज्ञानं न विचारं विनेति, विचारकर्तव्यता आर्थिकांशे निपतति । आर्थिकांशपतितं विचारमादाय नियमविधित्वं सिद्धवत् करणीयम् । लक्षणां विना विचारो यदा समभिलषितः तदा श्रवणविधिः लक्षणावृत्त्या विना, विचारमर्थं जनयेदिति प्रतिपन्नम् । सोऽयं विचारः इष्यमाणज्ञानसाधनत्वेन अर्थाक्षिप्तस्सन् प्रयोजनेन अन्वेति । श्रवणविधेः जनिता कर्तव्यताबुद्धिः अध्याहारं कर्तव्या इति पदं नापेक्षते इत्युक्तं भवति । यदि च लक्षणा न स्यात् तर्हि विचारस्य श्रौतत्वहानेः, श्रवणपदस्य केवलं श्रवणमिति जिज्ञासापदस्य ज्ञातुमिच्छेति चार्थो वर्णनीयः । तथासति नियमविधेः व्यावर्त्यः गुरुरहितविचारः, विधेयः ब्रह्मात्मैक्यविचारश्च न सम्भवतः । तस्मात् लक्षणाध्याहारावपहाय नियमविधिस्वीकारः सम्प्रतिपद्यते इति न वक्तुं पारयामः ।

8. इच्छायाः सत्वेऽपि बहुत्रकृतेः अनुदयात् जिज्ञासापदेन प्रकृत्यर्थज्ञानसाधनत्वेन विचारः अर्थसिद्धः इति न स्वरसं वचः । अथातो ब्रह्मविचारः इति यदि सूत्रं स्यात् तर्हि प्रवृत्तित इच्छाया उपलब्धेः पूर्वमस्मदुक्तरीत्या विचारेणेच्छा आक्षिप्यते इति वक्तुं सुकरम् । अत्र पुनर्नतथा ।

अथ पुनरसमन्वयाधिकरणे वर्णकान्तरमित्युपक्रम्य ज्ञानविधिनिरासः कृतः । तस्मिन् सन्दर्भे श्रवणविधेरुन्मूलनं कृतं तत्रभवता अन्नम्भट्टेन "शाब्दं परोक्षज्ञानं श्रवणशब्दवाच्यं श्रोतव्य इत्यनेन विधीयते तच्चापूर्वद्वारा अविद्यानिवृत्तावुपयोक्ष्यते इति न वाच्यम्" इति यदुक्तम् तत्रोच्यतेः- अपरोक्षज्ञानं प्रति दर्शनश्रवणमनननिदिध्यासनानां साधनत्वं श्रुतिविहितमिति संशयाभावात् पूर्वपक्षत्वेन अस्योपस्थापनं न रमणीयम् । "मनन-

निदिध्यासनयोरपि अविद्यानिवृत्तावपूर्वद्वारा साधनत्वापाताच्च" इति यदुक्तं तत्राप्युपपत्तिरेव न त्वापत्तिः। साधनानामेषां साक्षात् प्रयोजकत्वं न त्वपूर्वद्वारा इति चास्माकमाशयः। भावं तु बादरायणोऽस्ति हि २-३-३३ इति सूत्रस्य वृत्तौ तत्रभवानन्नम्भट्ट एव "देवताप्रीतिरेव कर्मणां व्यापरत्वेन कल्प्यते, न त्वात्मसमवेतमपूर्वाख्यं मानान्तरागोचरं कल्पनार्हम्" इत्यूचिवान्। "यमेवैष वृणुते तेन लभ्यः" इत्युपनिषद्वाक्यबलाच्च साधनान्यभ्यस्यतः मुमुक्षोः अपरोक्षज्ञानाय अपूर्वमनावश्यकम्। उक्तं हि – भजज्जनपरिश्रमः भगवदनुकम्पा इति। उत्तरमीमांसायां च दर्शनश्रवणमनननिदिध्यासनानां दृष्टप्रयोजनत्वमङ्गीकृतम्। चतुर्थाध्याये "आत्मसाक्षात्कारफलकत्वेन दृष्टार्थत्वात्" इति तत्रभवतैवोक्तमन्नम्भट्टेन। फलं प्रत्यासन्नत्वात् फलाध्याये आवृत्तिरसकृदुपदेशात् इत्युपक्रम्य श्रवणादीनामावृत्तिः कर्तव्येत्यभिहितम्। अपूर्वं विहाय दृष्टार्थत्वाङ्गीकारे इहजन्मनि कुतो न मोक्षप्राप्तिरिति प्रश्ने, ब्रूमः। श्रवणादिसाधनानामपर्याप्तत्वमेव कारणमिति। अपरोक्षब्रह्मानुभववतस्तु विषये साधनानामावश्यकतैव नास्तीति श्रवणादीनां साधनत्वहानिः स्वरससिद्धा। मुमुक्षोः जिज्ञासोरेवात्र प्रस्तुतत्वात् श्रवणादीन्यवश्यमनुष्ठेयानीति प्रतिपन्नम्।

ततः परं "द्रष्टव्य इति दर्शनानुवादेन विधीयमानयोस्तयोः दर्शनसाधनत्वमेवेति वाच्यम्, तथा सति श्रवणस्यापि उपांशु याजवत् प्रायपाठेन दर्शनसाधनत्वेनैव विधेरुचितत्वात्" इति यदुक्तं तदभ्युपगम्य ब्रूमः। उपांशुयाजवत् प्रायपाठेन दर्शनसाधनत्वं यदुच्यते तत्तावत् विमृश्यताम्। आग्नेयाग्नीषोमीययोः मध्ये उपांशुयागः सम्भवति। 'उपांशुयागमन्तरा यजति" इत्युक्त्या उपांशुयागस्य प्रधानयागसाधनत्वमस्ति। तथैव द्रष्टव्य इति विधेः अङ्गत्वेन श्रवणादीनामुपायत्वं कथम्? प्रायपाठेनेति चेत् सत्यम्। दर्शनानुवादः यदि सेत्स्यति तर्हि युज्यत एतद्। "आत्मनि दृष्टे श्रुते मते विज्ञाते च इदं सर्वं विदितं भवति" इति बृहदारण्यकवचने आत्मैव श्रवणमनननिदिध्यासनेषु गोचरः न त्वात्मदर्शनम्। "इदं सर्वं विदितं भवति" इत्युक्त्या ... प्रति चतुर्णां साधनत्वम्। तदपहाय दर्शन-



साधनत्वेन श्रवणमनननिदिध्यासनानां साधनत्वमङ्गीकृतम् । भवतु, तथापि अपरोक्षं परोक्षं वा शब्दज्ञानमिति विमृश्य उभयथापि श्रवणविधेरनुपपत्तिः दर्शिता । "दशमस्त्वमसीत्यादावपरोक्षे वस्तुनि शब्दस्यापरोक्षज्ञानजनकत्वेन अपरोक्षे ब्रह्मणि शब्दस्य परोक्षज्ञानजनकत्वायोगात्" इति वाक्येन परोक्षज्ञानजनकत्वं शब्दस्य वारितम् । "न द्वतीयः तस्यैव तं प्रति विधानप्रयोगात्" इति वाक्येन चापरोक्षज्ञानजनकत्वं निरस्तम् । पूर्वमभ्युपगतो नियमविधिः कुत्र गत इति न ज्ञायते ।

"न चापातज्ञानं बिधेयम् अध्ययनादेव सिद्धत्वात्" इति वचनं तु समञ्जसमेम । "न च गुरुमुखात् तात्पर्यज्ञानं विधेयम् तस्य श्रवणशब्दार्थत्वाभावात्" इत्युक्तं तु न समञ्जसम् । यतो हि तत्रभवान् अन्नम्भट्ट एव जिज्ञासाधिकरणे "अवधारणात्मकज्ञानस्य अध्ययनमात्रात् प्राप्तत्वेऽपि आत्मज्ञानं द्रष्टव्य इत्यनूद्यते । दर्शनसाधनापेक्षायां वेदान्तवाक्यमेव तत्साधनं तच्चाविचारितं न निश्चयायालमिति मनननिदिध्यासनसहकृतं विचारितवेदान्तवाक्यं आत्मसाक्षात्कारहेतुरित्ययमर्थः सम्पद्यते" इति स्पष्टमुल्लिखितवान् । अत्र पुनः श्रवणविधिमप्यपाकरोतीति स्वोक्तिविरोधः नः प्रतिभाति । पठितव्य इत्यस्मात् श्रोतव्यपदस्यार्थः अयमेव यत् गुरुमुखात् श्रोतव्यमिति । अयं चार्थः विस्तरेणोपपादित एवास्माभिरितः पूर्वम् । तात्पर्यज्ञानं परोक्षज्ञानोद्देश्येन वा अपरोक्षज्ञानोद्देश्येन वा इति प्रश्नः पुनराक्षिप्तः । श्रवणादीनां साधनत्वं यदा श्रुत्यभिहितं तदा अपरोक्षज्ञानोद्देशेन विहितमपि परोक्षज्ञानमेव जनयति, परोक्षज्ञानोद्देशेन विहितमपि परोक्षमेव ज्ञानं जनयति दृष्टानुसारित्वात् कल्पनायाः ।

"तात्पर्यज्ञानस्य शाब्दज्ञानहेतुत्वे मानाभावाच्च तद्ग्राहकन्यायानामेव तद्धेतुत्वात्" इति च यदुक्तं तन्न साम्प्रतम् । श्रोतव्यशब्दस्य गुरुमुखात् तात्पर्यज्ञानमित्यर्थः सम्पन्नः । "तात्पर्यज्ञानं च न विचारमन्तरेणेति विचार आक्षिप्यते" इति यदुक्तं तत्रेदं विचार्यतेः– तात्पर्यज्ञानं द्विविधम् साधनं फलभूतमिति, च । द्वयमपि ब्रह्मज्ञाने आवश्यकम् । तच्च तात्पर्य-

ज्ञानं विचारमाक्षिपति विचारं विना तस्यानुदयात् । अर्थात् तात्पर्यज्ञाना-देव विचारो जायते स च विचारः पुनः पुनः तण्डुलावहननन्यायेन क्रियते आवृत्तिरसकृदुपदेशात् इत्युक्तत्वात् । लोके तात्पर्यज्ञानं फलं भवति कार्यान्वयि जायते । वेदान्तशास्त्रेतु विचारस्यैव कर्तव्यत्वमिति तात्पर्य-ज्ञानमेव तेनाक्षिप्यते इत्यस्माकमाशयः । विनिगमनाविरहात् तात्पर्यज्ञान-सहकृत एव लक्षणीयो भवति विचारः । न च तात्पर्यज्ञानेन विचारस्याक्षेप-लभ्यत्वे विचारस्य लक्ष्यत्वमव्याहतमिति वाच्यम् । आक्षेपलभ्येऽर्थे लक्षणाया अप्रसक्तेः । तदुक्तं काव्यप्रकाशे, "गौरनुवन्ध्यः इत्यादौ श्रुतिचोदितमनुबन्धनं कथं मे स्यादिति जात्या व्यक्तिराक्षिप्यते । न तु शब्देनोच्यते । "विशेष्यं नाभिधा गच्छेत् क्षीणशक्तिः विशेषणे" इति न्यायादित्युपादानलक्षणा तु नोदाहर्तव्या, नह्यत्र प्रयोजनमस्ति न वा रुढिरियम् । व्यक्त्यविनाभावात्तु जात्या व्यक्तिराक्षिप्यते यथा क्रियता-वित्यत्र कर्ता" इत्यादि । तस्मात् विचारस्याक्षेपलभ्यत्वं लक्ष्यत्वं चेति द्वयं परस्परविरुद्धम् । तात्पर्यज्ञाने न विश्रान्तिरिति विचारः स्वीकार्यः यस्य परिपाकः मननरूपेण तस्य चाग्रे निदिध्यासनरूपेण च परिणमेत् । साधनानामेषां पौनः पुन्यमव्याहतं प्रचलेदिति ।

"लक्षणायां नियमविधिः नियममिधौ लक्षणेति अन्योन्याश्रयप्रसङ्गः इति यदुक्तं तद् विमृश्यते :— "तात्पर्याद्धि वृत्तिः न तु वृत्तेः तात्पर्यम्" इति विदुषामभिमतन्यायात् जिज्ञासाया विधेयत्वतात्पर्येण लक्षणाध्याहारा वाश्रीयेते । तदा ब्रह्मविचारः कर्तव्यः इति वाक्यार्थः स्यात् । सति च, सिद्धं विधिं विमृश्य लोकसिद्धत्वात् विचारस्य, अपूर्वविधित्वं विहाय नियम-विधित्वमास्थीयते । एवञ्च लक्षणानन्तरमेव विधित्वनियमविधित्वयो-रभ्युपपत्तिः इति नान्योन्याश्रयदोषः प्रसज्यते कथमपि । "अपरोक्षज्ञानं तात्पर्यज्ञानाजन्य" मिति वचनं "तात्पर्यज्ञानस्य शाब्दज्ञानहेतुत्वे माना-भावाच्च तद्ग्राहकन्यायानानेव तद्धेतुत्वात्" इति च वचनं विव्रियेते :- वेदान्तानां ज्ञानविधिपरत्वं निरसितुं महता प्रयत्नेन बद्धः परिकरः तत्रभवता अन्नम्भट्टेन । जिज्ञासाधिकरणे "अवधारणात्मकमपि ज्ञानं

अध्ययनविधिप्राप्तत्वेन विध्यनर्हत्वात् इति पूर्वपक्षमनूद्य वेदान्तवाक्यं विचारितमेवआत्मसाक्षात्कारहेतुरित्ययमर्थः सम्पद्यते" इति तत्रभवतैवोक्तम्। तद्रीत्या अवधारणात्मकज्ञानमेव तात्पर्यज्ञानतया समन्वयाधिकरणे व्यवहृतमिति वयं भावयामः। तथा च तात्पर्यज्ञानं परोक्षज्ञानोद्देशेन विधीयते अन्वयव्यतिरेकसिद्धत्वादित्युक्तम्। अस्मन्मते तात्पर्यज्ञानं परोक्षज्ञानायापरोक्षज्ञानाय वा न विधीयते। विधीयते तु विचारः यं प्रति तात्पर्यं साधनमेवार्थाक्षिप्तम्। तस्मात् मध्ये तात्पर्यज्ञानस्य शाब्दज्ञानहेतुत्वे मानाभावात्" इत्यादिना न किञ्चित् प्रयोजनम्। "न च न्यायविचार एव विधेयः " इति यदुक्तम् तदेवास्माभिरुपादत्तं न्यायविचारः विधेय इति। "तात्पर्यज्ञानमदृष्टद्वारा तदुपयोगि अस्त्विति वाच्यम्" इत्युक्त्वा "शाब्दज्ञानद्वारा मननादिक्रमेण चरमसाक्षात्कारहेतुत्वस्यापि सिद्धत्वेन पुनरपूर्वद्वारा विधानायोगात्" इति यदुक्तं तत्रापूर्वप्रक्रिया परित्यक्तैवास्माभिः। "तद्विज्ञानार्थं गुरुमेवाभिगच्छेत्" इति श्रुत्या दृष्टद्वारत्वसम्भवात्। परोक्षज्ञानस्यापरोक्षज्ञानस्य तात्पर्यज्ञानस्य विचारस्य वा सिद्धत्वात् न श्रवणविध्यवकाशः इति यदुक्तं तत् समाधीयते। परोक्षज्ञानस्य सिद्धत्वेऽपि अपरोक्षज्ञानं प्रति तात्पर्यज्ञानस्य अपर्याप्तत्वात् विचारस्य चापर्याप्तत्वात् पुनः पुनरावृत्ति. कर्तव्येति वचनेन ब्रह्मविचारादन्यो विचारः व्यावर्त्यते, तस्मात् नियमविधिः।

वस्तुतः "तं त्वौपनिषदं परुषं पृच्छामि" "नावेदविन्मनुते तं बृहन्तम्" इत्यादिश्रुत्या मानान्तरावेद्यत्वनिश्चयात् वेदान्तवाक्यमननाद्यावश्यकतायाः दार्ढ्यापादनाय श्रोतव्यपदं तदनुकूलतात्पर्यज्ञानसहकृतविचारं प्रतिपादयतीति न संशीतिः। अपूर्वं विनैव सोपानक्रमवत् साधनानि ब्रह्मज्ञाने प्रवर्तन्ते इति सुवचत्वात्, तात्पर्यज्ञानमपूर्वं, शाब्दज्ञानं, तात्पर्यानुकूलन्यायान् मध्ये आनीय व्याक्षेपः कृत इति प्रतीयते। गुरूपसदनं विना परोक्षज्ञानस्य तात्पर्यज्ञानस्य विचारस्य वा असिद्धत्वात् श्रवणविध्यवकाशः अस्त्येव। गुरुमेवाभिगच्छेत् इति लिङ् श्रोतव्य इत्यत्र तव्यत् च गमानार्थकौ स्तः। अन्ततो गत्वा महता प्रयत्नेन श्रोतव्यो मन्तव्यः इति वेदवाक्यस्य वृथात्वं

प्रतिपाद्यते, विधित्वं नाङ्गीक्रियते यन्न समीचीनं प्रतिभाति, यतो हि तदर्थिका हि प्रवृत्तिः शास्त्रस्य । दर्शनश्रवणादीनां वेदविहितत्वात् श्रीशङ्करभाष्यानुसारेण वेदान्ता यद्यपि न ज्ञानविधिपराः तथापि विवरण–प्रकारेण नियमविधिपरत्वं तेषां नापास्यते । ज्ञानविधिकल्पने सिद्धब्रह्म-प्रतिपादनं न भवितेति भगवत्पादा जागरूका अभवन् । किन्तु वेदवाक्यस्य वृथात्वमनिच्छद्भिः भाष्यकारैः संसारविमुखीकरणार्थः वर्णितः विधिच्छाया-पराणां वचसाम् ।

अपरोक्षज्ञानसाधनत्वेन मौनं विधीयते तृतीयाध्याये सहकार्यन्तर-सूत्रेण ।

श्लो. यन्मनसा न मनुते येनाहुर्मनोमतम् ।
तदेव सोम्यत्वं विद्धि नेदं यदिदमुपासते ।।

इति श्रुतिवाक्याकलनाय मौनं यदालम्ब्यते ततःपूर्वं श्रवणमननयोः सिद्ध–वस्तुनोऽपि परोक्षत्वं नापास्यते । तथाहि :— प्रथमाध्याये क्रियमाणस्य विचारस्य श्रवणमिति द्वितीयाध्याये मननमिति च प्रामाणिका व्यवहरन्ति । ततः परं तृतीयाध्याये मौनं च पक्षे विहितं सूत्रकृता । तस्मादपरोक्षे ब्रह्मणि श्रवणमनननिदिध्यासनानि साधनानि भवन्ति यानि विना शास्त्रा-रम्भ एव न स्यात् । साधनानि च सिद्धब्रह्मणि कुण्ठीभवन्त्यपि साधनत्वं न त्यजन्ति नेति नेतीति वाक्यबलात्, संसारनिषेधाय नियमविधावुपयुज्यते । न च संसारस्य पक्षप्राप्तिः नास्तीति वाच्यम् सर्वं खल्विदं ब्रह्मेति वाक्या-दापातज्ञानेन तस्यापि प्राप्तिः स्यादिति पूर्वमुक्तमस्माभिः । अपरोक्ष-ज्ञाने च परोक्षमपि ब्रह्मैव अपरोक्षमपि ब्रह्मैव । विचारे क्रियमाणे तु अपरोक्षमपि ब्रह्म परोक्षमेव । तत्रभवता अन्नम्भट्टेन तु जिज्ञासासूत्रवृत्तौ श्रवणविधिविषयेऽवलम्बितो मध्येमार्गः विवरणभामतीप्रस्थानयोः, पुनश्च समन्वयाधिकरणे आत्मज्ञानविधिभयाच्च तत्खण्डनं कृतमिति स्ववचन-विरोधित्वं सिद्ध्यति ।

श्लो. शास्त्रं ब्रह्मविचाराख्यमध्यायाश्च चतुर्विधाः ।
समन्वयाविरोधौ द्वौ साधनं च फलं तथा ।। इति वचनानु-

सारेण तृतीयाध्यायस्य साधनसमर्पकत्वं सिद्धम् । तच्च साधनं सगुणोपासनारूपमिति शास्त्रविदो जानन्ति । तस्योपासनाप्रकरणस्यापि निर्गुणे ब्रह्मणि तात्पर्यम् । सगुणे अवान्तरतात्पर्यम् । तदुक्तं संक्षेपशारीरके :— सगुणवाक्यमपीह समन्वितं

भवति निर्गुणवस्तुनि सर्वशः ।
न खलु निर्गुणवस्तुसमन्वयं ।
न सहते सगुणस्य समन्वयः ॥ इति

यत्र पुनरुक्तोऽप्युपाधिरविवक्षितः तन्निर्विशेषप्रकरणमित्युच्यते । तत्रापि निर्विशेषवस्तुज्ञापनं द्विधा भवति नेति नेति, सत्यंज्ञानमनन्तं ब्रह्म ऐतदात्म्यमिदं सर्वम् इति परप्रतिषेधेन विधिमुखेन च-इत्यादिवचनानि प्रास्ताविककर्तॄणां श्री पि· यस्· रामशास्त्रिणां, ज्ञेयत्वं ब्रह्मणः स्पष्टमावेदयन्ति । जिज्ञासाधिकरणे च इच्छाविषयकज्ञानस्य साध्यत्वमभिमतं अजहल्लक्षणया । तस्माच्च ब्रह्मणः ज्ञेयत्वमविरुद्धम् ।

"फलव्याप्यत्वमेवास्य शास्त्रकृद्भिः निवारितम् ।
ब्रह्मण्यज्ञाननाशाय वृत्तिव्याप्तिरपेक्षिता" ॥

इति पञ्चदशीश्लोकश्च स्मरणीयः । रज्जुरयं नायं सर्पः इत्यत्र रज्जुसत्वेऽपि रज्जुज्ञानं विधेयमेव । तथैव ब्रह्मज्ञानं विधीयते द्रष्टव्येति पदेनेत्युक्तौ न दोषः प्रतिभाति ।

ननु ज्ञानस्य साध्यत्वं यद्यभिमतं ज्ञानविधित्वमापतितं यत् भाष्यकारैः प्रतिषिद्धमिति चेत् - ब्रह्मज्ञानं साध्यम् किन्तु ब्रह्म साध्यं न भवेत् ज्ञानेन । ज्ञेयकोटिप्रविष्टं न स्यात् ज्ञातृभिन्नत्वेन ज्ञानविषयत्वेन वा ज्ञाते सति ज्ञानमपि मानसी क्रिया भवति—तादृक् क्रियासम्पत्तये वेदचोदना न जाता, सिद्धब्रह्म लक्षयितुमेव वेदवाक्यानां प्रवृत्तेः । तस्मात् ब्रह्मणः सिद्धस्यैवापरोक्षज्ञानं यत् तत् साध्यमिति दर्शनाद्युपाया विहिताः । तस्मात् साधनानां ज्ञानविधिपरत्वं वारयित्वा भगवत्पादैः विधिशेषत्वं ब्रह्मणः इत्ययमर्थः भाष्ये

आक्षिप्य निरस्तः :- "यत् पुनरुक्तं श्रवणात् पराचीनयोः मननिदिध्यासनयोः दर्शनात् विधिशेषत्वं ब्रह्मणः, न स्वरूपपर्यवसायित्वमिति । तन्न । श्रवणवदवगत्यर्थत्वात् मनननिदिध्यासनयोः । यदि ह्यवगतं ब्रह्म अन्यत्र विनियुज्येत, भवेत्तदा विधिशेषत्वम् । न तु तदस्ति, मनननिदिध्यासनयोरपि श्रवणवदवगत्यर्थत्वात् । तस्मान्न प्रतिपत्तिविधिविषयतया शास्त्रप्रमाणकत्वं ब्रह्मणः सम्भवतीत्यतः स्वतन्त्रमेव ब्रह्म शास्त्रप्रमाणकं वेदान्तवाक्यसमन्वयादिति सिद्धम्" इति ।

"श्रुतिमतस्तर्कोऽनुसन्धीयताम्"इति साधनपञ्चके श्रीशङ्करदेशिकेन्द्रैरुक्तम् । शास्त्रयोनित्वाधिकरणे चान्नम्भट्टेनैव स्वयमुक्तम्, "तर्कस्तु अनुग्राहकतया अङ्गीक्रियते । अनुमानमपि तर्कतयैवोपयुज्यते, न तु स्वातन्त्र्येणेत्यभिप्रायः" इति । किन्तु तर्कबलेन तत्रभवता श्रोतव्यादि विधिवाक्यमपाकृतमिति खिद्यति मानसं नः ।

केचित् पुनः "तमेवैकं जानथ आत्मानम् अन्या वाचो विमुञ्चथ" इति श्रुत्यनुगृहीतं परिसंख्याविधिं कल्पयन्ति श्रवणस्य । अस्माकं पुनः नियमविधिसिद्धौ तत्पर्यन्तानुधावनमनावश्यकमिति परितोषः । अपि च श्रुतहानिरश्रुतकल्पना प्राप्तबाधश्चेति दूषणत्रयमङ्गीकृत्य कुतः प्रयास आस्थेयः श्रवणस्य नियमविधावुपलब्धे सतीति विरमामस्तस्मात् । श्रवणमनननिदिध्यासनानामादितः आन्तपर्यन्तं व्यासज्यवृत्तितयोत्तरमीमांसायां व्याप्तत्वात् तद्विधित्वनिराकरणप्रयासो न मनोरमः । दर्शनस्य श्रवणस्य मननस्य निदिध्यासनस्य च तस्मात् साधनत्वमव्याहतम् । अपरोक्षज्ञानं प्रति अन्तरङ्गतया फलाध्यायेऽप्युपात्तानामेषां प्राधान्यं नापचीयते । तद् यथा यथा विचार्यते तथा तथा सिद्धान्तलेशसंग्रहे

"नियमः परिसंख्या वा विध्यर्थोऽत्र भवेद्यतः
अनात्मादर्शनेनैव परात्मानमुपास्महे" इति वर्तिकवचनानुसारिणां वचनमेव साधीयः प्रतीयते ।

श्लो "अत एव श्रुतिर्बाह्यं
बाधित्वा शेषयत्यदः।
स एष नेति नेत्यात्मे-
त्यतद्व्यावृत्तिरूपतः" इति
पञ्चदशीप्रोक्तोपदेशध्यानेन मौनमवलम्ब्यते ॥

REFERENCE BOOK

प रा म र्श वि ष य ग्र न्थाः

1. ब्रह्मसूत्रशङ्करभाष्यम्
आवृत्तिरसकृदुपदेशात् इति सूत्रस्य ४-१-१

2. लौगाक्षिभास्करस्य अर्थसंग्रहः
पञ्चमपृष्ठे धर्मविचारशास्त्रस्य आवश्यकता

3. ब्रह्मानन्दसरस्वतीविरचिता
वेदान्तसूत्रमुक्तावलिः
आनन्दादयः प्रधानस्य ३-३-११

-:०:-

# श्रीः

# चतुर्मुखः हिरण्यगर्भश्च

"जन्माद्यस्य यतः" इति सूत्रं विवृण्वता तत्रभवता अन्नम्भट्टेन "आद्यस्य ब्रह्मणः चतुर्मुखस्य यतो जन्म तद् ब्रह्मेति केषांचिन्मतमुपन्यस्य हिरण्यगर्भ-जननानन्तरमेव भूतसृष्टिरिति वाच्यम् समष्टिलिङ्गशरीराभिमानिनः हिरण्यगर्भस्य भूतसृष्ट्यनन्तरं जननावश्यकत्वेन ततः पूर्वमुत्पत्तौ माना-भावात्" इत्याद्युक्तम्। एतेनान्नम्भट्टमते चतुर्मुखस्य हिरण्यगर्भस्य समष्टिजीवस्वरूपस्य चैक्यमस्तीत्यवगम्यते। तदेष विषयः विमर्शपदवी-मारोप्यते :—

"हिरण्यगर्भः समवर्तताग्रे
भूतस्य जातः पतिरेक आसीत्।
स दाधार पृथिवीं द्यामुतेमां
कस्मै देवाय हविषा विधेम" ऋ सं १०-१२१-१

इति श्रुत्युक्तः सूत्रात्मा, मुख्यप्राणः, प्राणः, समष्टिलिङ्गशरीराभिमानी प्रथमो जीवः, हिरण्यगर्भ इति वेदान्तशास्त्रे प्रसिद्धः। उक्तं खलु वेदान्त-सारे, "एतत्समष्ट्युपहितं चैतन्यं सूत्रात्मा हिरण्यगर्भः प्राणश्चेत्युच्यते—सर्वत्रानुस्यूतत्वात् ज्ञानेच्छाक्रियाशक्तिमदुपहितत्वाच्च" इति। अयमेव विषयः

"प्राज्ञस्तत्राभिमानेन तैजसत्वं प्रपद्यते।
हिरण्यगर्भतामीशः तयोः व्यष्टिसमष्टिता" इति पञ्चदश्यामुक्तः।

तस्यामेव चित्रदीपप्रकरणेपुनः—

"हैरण्यगर्भाः प्राणात्मवादिनस्त्वेवमूचिरे।
चक्षुराद्यक्षलोपेऽपि प्राणसत्वे तु जीवति" इति

पुनः--

"नित्यज्ञानादिसत्त्वेऽस्य सृष्टिरेव सदा भवेत् ।

हिरण्यगर्भ ईशोऽतो लिङ्गदेहेन संयुतः ।।

उद्गीथब्राह्मणे तस्य महात्म्यमतिविस्तृतम् ।

लिङ्गसत्त्वेऽपि जीवत्वं नास्य कर्माद्यभावतः" इति चोक्तम् । अयं हिरण्यगर्भः जीवो न भवति कर्माद्यभावतः" इति तस्येश्वरत्वं प्रतिपादितम् ।

अयञ्चेश्वरः–

"प्रधानक्षेत्रज्ञपतिः गुणेश इति हि श्रुतिः ।

आरण्यके सम्भ्रमेण ह्यन्तर्यम्युपपादितः ।।"

इति च पञ्चदश्यामेवोक्तम् । तस्मात् भगवद्गीतायाम्

"ईश्वरस्सर्वभूतानां हृद्देशेऽर्जुन तिष्ठति ।

भ्रामयन् सर्वभूतानि यन्त्रारूढानि मायया ।।" इत्युक्तः अन्तर्यामी ईश्वरः हिरण्यगर्भ एवेत्युक्तं भवति । पञ्चदश्युक्तरीत्या यदास्य जीवत्वमनभिमतं तदा अव्याहतमस्येश्वरत्वम् । ततः मुख्यजीवप्रथमजीवशब्दौ तस्मिन्नौपरिचारिकौ स्याताम् । सूत्रात्मेति संज्ञा चास्यानेकदेहेषु पुष्पेषु सूत्रस्येवास्य स्थितिरिति स्यात् । "स दाधार पृथिवीं द्यामुतेमाम्" इति वचनेन जीवस्वरूपमुच्यचे । तथाहि ।......

"गामाविश्य च भूतानि धारयाम्यहमोजसा ।

पुष्णामि चौषधीः सर्वाः सोमो भूत्वा रसात्मकः ।।

अपरेयमितस्त्वन्यां विद्धि पार्थ सनातनीम् ।

जीवभूतां महाबाहो ययेदं धार्यते जगत् ।।" इति पराप्रकृतिरूपेण वर्णितो जीव एव जगत् धारयति ।

"द्वाविमौ पुरुषौ लोके क्षरश्चाक्षर एव च

क्षरस्सर्वाणि भूतानि कूटस्थोऽक्षर उच्यते ।।"

इत्यक्षरपुरुषत्वेन स एवाभिहितः प्रतीयते । अस्यैव जगद्धारकत्वेन प्रथमोक्तश्रुतौ वर्णनं कृतमिति स्फुटम् । अन्ततो गत्वा कूटस्थः हिरण्यगर्भः ईश्वरः इति पर्यायपदानि प्रतीयन्ते । "हैरण्यगर्भाः प्राणात्मवादिनस्त्वेवमूचिरे" इति पञ्चदशीवचनेन प्राणमयकोशस्यैव पुरा हिरण्यगर्भसंज्ञयोपासना कृतेति गम्यते, ततः हिरण्यगर्भस्य प्राण इति मुख्यप्राण इति चाख्या समजायतेति केचित् वदन्ति ।

तथाचेश्वरः हिरण्यगर्भपदवाच्यः ब्रह्माण्डसमष्टिजीवाभिमानी देवः रजस्सत्त्वतमोगुणप्रतिनिधीन् ब्रह्मविष्णुरुद्रान् जनयति । एवं जनकः मूर्तित्रयाद् भिन्नत्वेनाभिहितः । देवीभागवतात् समुद्धृतेऽस्मिन् प्रसङ्गे भङ्ग्यन्तरेणायमर्थः प्रोक्तः ।

"अथ सा कृष्णचिच्छक्तिः कृष्णगर्भं दधार ह ।
शतमन्वन्तरं यावत् ज्वलन्ती ब्रह्मतेजसा ॥

"कृष्णप्राणा हि देवी सा कृष्णप्राणाधिकप्रिया ।
कृष्णस्य सङ्गिनी शश्वत् कृष्णवक्षस्स्थलस्थिता ॥

शतमन्वन्तरान्ते च कालेऽतीते तु सुन्दरी ।
सुषाव डिम्भं स्वर्णाभं विश्वाधारालयं परम् ॥

सृष्ट्वा डिम्भं च सा देवी हृदयेन व्यदूयत ।
उत्ससर्ज च कोपेन ब्रह्माण्डे गोलके जले ॥

## नवमस्कन्धे तृतीयाध्यायः–

श्रीनारायण उवाच :–

अथ डिम्भो जले तिष्ठन् यावद्वै ब्रह्मणो वचः ।
ततस्स काले सहसा द्विधाभूतो बभूव ह ॥

तन्मध्ये शिशुरेकश्च शतकोटिरविप्रभः ।
क्षणं रोरुयमाणश्च स्तनान्धः पीडितः क्षुधा ॥

पित्रा मात्रा परित्यक्तो जलमध्ये निराश्रयः ।
ब्रह्मांडासंख्यनाथो यो ददर्शोर्ध्वमनाभवत् ॥

स्थूलात् स्थूलतनुस्सोऽपि नाम्ना देवो महाविराट् ।
परमाणुर्यथा सूक्ष्मात् परः स्थूलात् तथाप्यसौ ॥

तेजसा षोडशांशोऽयं कृष्णस्य परमात्मनः ।
आधारः सर्वविश्वानां महाविष्णुश्च प्राकृतः ॥

प्रत्येकं रोमकूपेषु विश्वानि निखिलानि च ।
अस्यापि तेषां संख्या च कृष्णो वक्तुं न हि क्षमः ॥

संख्या चेत् रजसामस्ति विश्वानां न कदाचन ।
ब्रह्मविष्णुशिवादीनां तथा संख्या न विद्यते ॥

प्रतिविश्वेषु सन्त्येवं ब्रह्मविष्णुशिवादयः ।
पातालात् ब्रह्मलोकान्तं ब्रह्माण्डं परिकीर्तितम् ॥

अत ऊर्ध्वं च वैकुण्ठः ब्रह्माण्डात् बहिरेव सः ।
तत ऊर्ध्वं च गोलोकः पञ्चाशत्कोटियोजनः ॥

नित्यस्सत्यस्वरूपश्च यथाकृष्णस्तथाप्ययम् ।
सप्तद्वीपमिता पृथ्वी सप्तसागरसंयुता ॥

ऊनपञ्चाशदुपद्वीपसंख्याशैलवनान्विता ।
ऊर्ध्वं सप्तस्वर्गलोका ब्रह्मलोकसमन्विताः ॥

पातालानि च सप्ताधः चैवं बह्माण्डमेव च ।
ऊर्ध्वं धराया भूलोकः भुवर्लोकः ततः परम् ॥

ततः परम् ब्रह्मलोकः तप्तकाञ्चनसन्निभः ।
एवं सर्वं कृत्रिमं च बाह्याभ्यन्तरमेव च ॥

तद्विनाशे विनाशश्च सर्वेषामेव नारद ।
जलबुद्बुदवत् सर्वं विश्वसंघमनित्यकम् ॥

नित्यौ गोलोकवैकुण्ठौ प्रोक्तौ शश्वदकृत्रिमौ ।।

प्रत्येकं रोमकूपेषु ब्रह्माण्डं परिनिश्चितम् ।
एषां संख्या न जानाति कृष्णोऽन्यस्यापि का कथा ?
प्रत्येकं प्रतिब्रह्माण्डं ब्रह्मविष्णुशिवादयः ।।

तिस्रः कोट्यः सुराणां च संख्या सर्वत्र पुत्रक ।
दिगीशाश्चैव दिक्पाला नक्षत्राणि ग्रहादयः ।।

भुवि वर्णाश्च चत्वारोऽप्यधो नागाश्चराचराः ।
अथ कालेऽत्र स विराडूर्ध्वं दृष्ट्वा पुनः पुनः ।।

डिम्भान्तरे च शून्यं च न द्वितीयं न किञ्चन ।
चिन्तामवाप क्षुद्युक्तः रुरोद च पुनः पुनः ।।

ज्ञानं प्राप्य तदा दध्यौ कृष्णं परमपूरुषम् ।
ततो ददर्श तत्रैव ब्रह्मज्योतिस्सनातनम् ।।

नवीनजलदश्यामं द्विभुजं पीतवाससम् ।
सस्मितं मुरलीहस्तं भक्तानुग्रहकारकम् ।।

जहास बालकस्तुष्टो दृष्ट्वा जनकमीश्वरम् ।
वरं तदा ददौ तस्मै वरेशः समयोचितम् ।।

मत्समो ज्ञानयुक्तश्च क्षुत्पिपासादिवर्जितः ।
ब्रह्माण्डासंख्यनिलयो भव वत्स लयावधि ।।

निष्कामो निर्भयश्चैव सर्वेषां वरदो भव ।
जरामृत्युरोगशोकपीडादिवर्जितो भव ।।
इत्युक्त्वा तस्य कर्णे स महामन्त्रं षडक्षरम् ।
त्रिः कृत्वश्च प्रजजाप वेदाङ्गप्रवरं परम् ।

प्रणवादिचतुर्थ्यन्तं कृष्ण इत्यक्षरद्वयम् ।
वह्निजायान्तमिष्टं च सर्वविघ्नहरं परम् ।।

मन्त्रं दत्वा तदाहारं कल्पयामास वै विभुः ।
श्रूयतां तद् ब्रह्मपुत्र निबोध कथयामि ते ।।

प्रतिविश्वं यत् नैवेद्यं ददाति वैष्णवो जनः ।
तत् षोडशांशो विषयिणो विष्णोः पञ्चदशास्य वै ।।

निर्गुणस्यात्मनश्चैव परिपूर्णतमस्य च ।
नैवेद्येचैव कृष्णस्य नहि किञ्चित् प्रयोजनम् ।।

यद्यद्ददाति नैवेद्यं तस्मै देवाय यो जनः
स च खादति तत्सर्वं लक्ष्मीनाथो विराट् तथा ।।

तं च मन्त्रवरं दत्वा तमुवाच पुनर्विभुः ।
वरमन्यं किमिष्टं ते तन्मे ब्रूहि ददामि च ।।

कृष्णस्य वचनं श्रुत्वा तमुवाच विराड् विभुः ।
कृष्णं तं बालकस्तावत् वचनं समयोचितम् ।।

बालक उवाचः—

वरो मे त्वत्पदाम्भोजे भक्तिर्भवतु निश्चला ।
सततं यावदायुर्मे क्षणं वा सुचिरं च वा ।।

त्वत्भक्तियुक्तो लोकेऽस्मिन् जीवन्मुक्तश्च सन्ततम् ।
त्वद्भक्तिहीनो मूर्खश्च जीवन्नपि मृतो हि सः ।

किं तज्जपेन तपसा यज्ञेन पूजनेन च ।
व्रतेन चोपवासेन पुण्येन तीर्थसेवया ।।

कृष्णभक्तिविहीनस्य मूर्खस्य जीवनं वृथा ।
येनात्मना जीवितश्च तमेव हि न मन्यते ।।

यावदात्मा शरीरेऽस्ति तावत् सशक्तिसंयुतः ।
पश्चात् यान्ति गते तस्मिन् स्वतन्त्राः सर्वशक्तयः ।।

स च त्वं च महाभाग सर्वात्मा प्रकृतेः परः ।
स्वेच्छामयश्च सर्वाद्यो ब्रह्मज्योतिस्सनातनः ।।

इत्युक्त्वा बालकस्तत्र विराम च नारद ।
उवाच कृष्णः प्रत्युक्तिं मधुरां श्रुतिसुन्दरीम् ॥

श्री कृष्ण उवाच

"सुचिरं सुस्थिरं तिष्ठ यथाहं त्वं तथा भव ।
ब्रह्मणोऽसंख्यपाते च पातस्तेन भविष्यति ॥

अंशेन प्रतिब्रह्माण्डे त्वं च क्षुद्रविराड् भव ।
त्वन्नाभिपद्मात् ब्रह्मा च विश्वस्रष्टा भविष्यति ॥

ललाटे ब्रह्मणश्चैव रुद्राश्चैकादशैव ते ।
शिवांशेन भविष्यन्ति सृष्टिसंहरणाय वै ॥

कालाग्निरुद्रस्तेष्वेको विश्वसंहारकारकः ।
पाता विष्णुश्च विषयी रुद्रांशेन भविष्यति ॥

मद्भक्तियुक्तस्सततं भविष्यसि वरेण मे ।
ध्यानेन कमनीयं मां नित्यं द्रक्ष्यसि निश्चितम् ॥

मातरं कमनीयां च मम वक्षस्स्थलस्थिताम् ।
यामि लोकं तिष्ठ वत्सेत्युक्त्वा सोऽन्तरधीयत ॥

गत्वा स्वलोकं ब्रह्माणं शङ्करं समुवाच ह ।
स्रष्टारं स्रष्टुमीशं च संहर्तुं चैव तत्क्षणम् ॥

श्री भगवानुवाच–

सृष्टिं स्रष्टुं गच्छ वत्स नाभिपद्मोद्भवो भव ।
महाविराड्रोमकूपे क्षुद्रस्य च विधे श्रृणु ॥

गच्छ वत्स महादेव ब्रह्मफालोद्भवो भव ।
अंशेन च महाभाग स्वयं च सुचिरं तव ॥

इत्युक्त्वा जगतां नाथो विरराम विधेस्सुत (हे नारद) ।
जगाम ब्रह्मा तं नत्वा शिवश्च शिवदायकः ॥

महाविराड्रोमकूपे ब्रह्माण्डगोलके जले ।
बभूव च विराट् क्षुद्रो विराडंशेन साम्प्रतम् ॥
श्यामो युवा पीतवासाः शयानो जलतल्पके ।
ईषद्धास्यः प्रसन्नास्यः विश्वव्यापी जनार्दनः ॥
तन्नाभिकमले ब्रह्मा बभूव कमलोद्भवः ।
सम्भूय पद्मदण्डे च बभ्राम युगलक्षकम् ॥
नान्तं जगाम दण्डस्य पद्मनालस्य पद्मजः ।
नाभिजस्य च पद्मस्य चिन्तामाप पिता तव ॥
स्वस्थानं पुनरागम्य दध्यौ कृष्णपदाम्बुजम् ।
ततो ददर्श क्षुद्रं तं ध्यानेन दिव्यचक्षुषा ॥
शयानं जलतल्पे च ब्रह्माण्डगोलकाप्लुते ।
यल्लोमकूपे ब्रह्माण्डं तं च तत् परमेश्वरम् ॥
श्रीकृष्णं चापि गोलोकं गोपगोपीसमन्वितम्
तं संस्तूय वरं प्राप ततः सृष्टिं चकार सः ॥
बभूवुः ब्रह्मणः पुत्राः मानसाः सनकादयः ।
ततो रुद्रकलाश्चापि शिवस्यैकादशस्मृताः ॥
बभूव पाता विष्णुश्च क्षुद्रस्य वामपार्श्वतः ।
चतुर्भुजश्च भगवान् श्वेतद्वीपे स चावसत् ॥
क्षुद्रस्य नाभिपद्मे च ब्रह्मा विश्वं ससर्ज ह ।
स्वर्गं मर्त्यं च पातालं त्रिलोकीं सचराचरम् ॥
एवं सर्वं रोमकूपे विश्वं प्रत्येकमेव च ।
प्रतिविश्वं क्षुद्रविराट् ब्रह्मविष्णुशिवादयः ॥

इत्येवं कथितं ब्रह्मन् कृष्णसंकीर्तनं शुभम् ।
सुखदं मोक्षदं ब्रह्मन् किं भूयः श्रोतुमिच्छसि ॥ इति ।
श्रीमद्भागवते एकादशस्कन्धे चतुर्विंशाध्याये च–

"तस्मिन्नहं समभवमण्डे ससिलसन्निधौ ।
मम नाभ्यामभूत् पद्मं विश्वाख्यं तत्र चात्मभूः ॥" इति
"विराट् मयासाद्यमानो लोककल्पविकल्पकः ।
पञ्चत्वाय विशेषाय कल्पते भुवनैः सह ॥" इति
चोक्तम् । तस्मादनुमीयते नारायण एव हिरण्यगर्भस्थानीयः विराट् च चतुर्मुखब्रह्मेति । देवीभागवतरीतिश्चास्य विचारस्य पुष्टिं जनयति । किन्तु विराट् क्षुद्रविराडित्याख्या तु भिद्यते ।

नामभेदे चतुर्मुखस्य ब्रह्मणो जनयिता (हिरण्यगर्भः) तस्मात् भिन्न-इति सिद्धान्तितं वेदान्तपरिभाषायाम् :–

"परमेश्वरस्य पञ्चतन्मात्राद्युत्पत्तौ सप्तदशावयवोपेतलिङ्गशरीरोत्पत्तौ हिरण्यगर्भस्थूलशरीरोत्पत्तौशाक्षात्कर्तृत्वम् । इतरनिखिलप्रपञ्चोत्पत्तौ हिरण्यगर्भद्वाराइत्युक्तम् । "यो ब्रह्माणं विदधाति पूर्वं यो वै वेदांश्च प्रहिणोति तस्मै" इति श्रुतिवचनेन हिरण्यगर्भ एव ब्रह्माणं जनयामासेति स्पष्टम् । हिरण्यगर्भोनाम मूर्तित्रयादन्यः प्रथमो जीवः स वै शरीरी प्रथमः स वै पुरुष उच्यते आदिकर्ता सभूतानां ब्रह्माग्रे समवर्तत" इति ।

हिरण्यगर्भसंज्ञा च कथमागतेति पश्यामः । मनुस्मृतौ तावत् प्रथमाध्यायारम्भ एव वीक्षामहे ।

"अप एव ससर्जादौ तासु बीजमवासृजत् ।
तदण्डमभवद्धैमं सहस्रांशुसमप्रभम् ॥

यत्तत् कारणमव्यक्तं नित्यं सदसदात्मकम् ।
तद्विसृष्टः स पुरुषो लोके ब्रह्मेति कीर्त्यते ॥

तस्मिन् जज्ञे स्वयं ब्रह्मा सर्वलोकपितामहः ।
तस्मिन्नण्डे स भगवानुषित्वा परिवत्सरम् ॥

स्वयमेवात्मनो ध्यानात् तदण्डमकरोत् द्विधा ।
तस्यां स शकलाभ्यां च दिवं भूमिं च निर्ममे ॥

मध्ये व्योम दिशश्चाष्टौ अपां स्थानं च शाश्वतम् ।
उद्ववर्हात्मनश्चैव मनः सदसदात्मकम् ।
मनसश्चाप्यहङ्कारमभिमन्तारमीश्वरम् ॥
महान्तमेवचात्मानं सर्वाणि त्रिगुणानि च ।
विषयाणां ग्रहीतॄणां शनैः पञ्चेन्द्रियाणि च
तेषां त्ववयवान् सूक्ष्मान् षण्णामप्यमितौजसाम् ॥
सन्निवेश्यात्ममात्रासु सर्वभूतानि निर्ममे ।
यन्मूर्त्यवयवाः सूक्ष्माः तस्येमान्याश्रयन्ति षट् ॥
तस्मात् शरीरमित्याहुः तस्य मूर्तिं मनीषिणः ।
द्विधाकृत्वात्मनो देहमर्धेन पुरुषोऽभवत् ॥

अर्धेन नारी तस्यां स विराजमसृजत् प्रभुः ।
तपस्तप्त्वासृजद्यंतु स स्वयं पुरुषो विराट् ॥

तं मां वित्तास्य सर्वस्य स्रष्टारं द्विजसत्तमाः ।
अहं प्रजाः सिसृक्षुस्तु तपस्तप्त्वा सुदुश्चरम् ॥

पतीन् प्रजानामसृजं महर्षीनादितो दश ।
एते मनूंस्तु सप्तान्यानसृजन् भूरितेजसः ॥

यदा स देवो जागर्ति तदेदं चेष्टते जगत् ।
यदा स्वपिति शान्तात्मा तदा सर्वं निमीलति ॥

इत्यादिना हिरण्मयादण्डादस्य सम्भवः इति हिरण्यगर्भनामधेयं व्युत्पद्यते । मनुस्मृतावुक्तः हिरण्यगर्भः विराजो मूलपुरुषः । विराड् च चतुर्मुखब्रह्मा स्यात् यः प्रजापतीनसृजत् पुराणान्तरानुसारेण ।

ततएव वेदान्तपरिभाषाव्याख्यायां विषयपरिच्छेदे "तस्मिन् जज्ञे स्वयं ब्रह्मा सर्वलोकपितामहः इत्यस्य तदीयलिङ्गशरीरं परमित्यर्थः" इति वर्णितम् । एतेनेदमुक्तं भवति लिङ्गशरीरसंघातः हिरण्यगर्भः, स्थूलशरीरसमष्टिरूपश्च विराट् चतुर्मुखब्रह्मेति । अण्डोद्भूतः सर्वलोकपितामहश्च भागवतोक्तप्रकारेण नारायण एव यो हिरण्यगर्भपदभाक्

भवेत् । लिङ्गस्थूलशरीरयोरभेदं पितामहशब्दस्योभयवाचकत्वं वाश्रित्यामरकोशे "हिरण्यगर्भो लोकेशः स्वयम्भूश्चतुराननः" इत्यभिहितम् । प्रायः तदाधारेणैवान्नम्भट्टेनापि तत्रभवता हिरण्यगर्भचतुर्मुखयोः अभेदः अभ्युपगतः ।

रूपोपन्यासाच्च १-२-२३ इति सूत्रस्य भाष्ये "त्रैलोक्यशरीरस्य प्रजापतेः जन्मादि इति निर्दिश्य स वै शरीरीप्रथमः स वै पुरुष उच्यते आदिकर्ता स भूतानां ब्रह्माग्रे समवर्तत" इति चोक्तम् । त्रैलोक्यशरीरीति वचनेन विराडभिधीयते। ततो विराड्चतुर्मुखः हिरण्यगर्भ इति पर्यायाः स्युः।

किन्तु हिरण्यगर्भशब्दः चतुर्मुखमूलभूतस्य विष्णोः अर्थात् विराजो मूलभूतस्य लिङ्गसमष्टिरूपस्य परमपुरुषस्यार्थात् परमात्मनः वाचको भवति। तत्र भवति प्रमाणं श्वेताश्वतरोपनिषत् । तत्र शङ्करभाष्ये हिरण्यगर्भपदस्य हितरमणीयज्ञानवानित्यर्थो वर्णितः । अनुकृतेस्तस्य चेति १-३-२२ सूत्रस्य वृत्तौ तत्रभवानन्नम्भट्टः "हिरण्मये परे कोशे विरजं ब्रह्म-निष्कलम् । तच्छुभ्रं ज्योतिषां ज्योतिः तद्यदात्मविदो विदुः" इति मुण्डकोपनिषद्वाक्यमुदाजहार । भाष्ये च मुण्डकोपनिषदः" हिरण्मये वुद्धिविज्ञानप्रकाशे परे कोश श्वासे" इति विवृतम् ।

किं च भगवद्गीतायामष्टमाध्याये "अधिभूतं क्षरो भावः पुरुषश्चाधिदैवतम् । अधियज्ञोऽहमेवात्र देहे देहभृतां वर" इति श्लोकस्य भाष्ये "पुरुषः आदित्यान्तर्गतः हिरण्यगर्भः सर्वप्राणिकरणानामनुग्राहकः सः अधिदैवतम्" इत्युक्तम्। सोऽयं परमात्मा न तु चतुर्मुखः ।

आप्रणखात् सर्व एव सुवर्णः छान्दोग्ये १-६-६७ च परमात्माभिहितः । तत्र भाष्ये "हिरण्मय इव हिरण्मयः। न हि सुवर्णविकारत्वं देवस्य सम्भवति। अतो लुप्तोपम एव हिरण्मयशब्दो ज्योतिर्मय इत्यर्थः । ज्योतिर्मयाण्येवास्य श्मश्रूणि केशाश्चेत्यर्थः । आप्रणखात् प्रणखो नखाग्रं नखाग्रेण सह सर्वः सुवर्णः इव भास्य इत्यर्थः ।" इत्युक्तम् । तस्मात् हिरण्यगर्भोऽपि परमात्मवाचकः ।

शब्दविशेषात् १-२-५ इति सूत्रस्य भाष्ये "यथा व्रीहिर्वा यवो वा श्यामाको वा श्यामाकतण्डुलो वा एवमयमन्तरात्मन् पुरुषो हिरण्मयः" इति श्रुत्यन्तरमुपादाय स एव हिरण्यगर्भ उक्तः ।

अपि च न च कार्ये प्रतिपत्त्यभिसन्धिः ४-३-१४ इति सूत्रे प्रतिसंचरो महाप्रलयः, तस्मिन् प्राप्ते परस्य हिरण्यगर्भस्यान्ते समष्टिलिङ्गशरीररूपविकारावसाने ब्रह्मलोकनिवासिनः कृतात्मानः शुद्धधियः तत्रोत्पन्नसम्यग्धियः सर्वे ब्रह्मणा मुच्यमानेन सह परं पदं प्रविशन्ति इति योजना इति रत्नप्रभायाम् । अत्र हिरण्यगर्भपदमपरं ब्रह्म विशिनष्टि । "परन्तु कार्यात्यये इतिसूत्रे "कार्यब्रह्मलोकप्रलयप्रत्युपस्थाने सति तत्रैवोत्पन्नसम्यग्दर्शनाः सन्तः तदध्यक्षेण हिरण्यगर्भेण सहातः परं परिशुद्धं विष्णोः परमं पदं प्रतिपद्यन्ते" इति भाष्ये व्याख्यातम् । तत् कथं सङ्गच्छते कार्यब्रह्मलोकपदेन वैकुण्ठकैलासादीनां ग्रहणे हिरण्यगर्भस्य जीवस्य तदध्यक्षत्वाभावात् इति शङ्का स्यात् । तस्या इत्थं समाधानं भवति भगवत्पादसिद्धान्तावलम्बेन सगुणब्रह्मोपासकानां तत्क्रतुन्यायेन सगुणब्रह्मण एव लोकविशेषोपाधिकस्य प्राप्यत्वावश्याभ्युपेयत्वे सति, हिरण्यगर्भलोक एव सत्यलोकाख्यः सगुणब्रह्माभिव्यक्तिविशेषविशिष्टवैकुण्ठकैलासादिबहुविधप्रदेशविशेषभागी' तस्य च लोकस्य हिरण्यगर्भ एवाध्यक्षः, तस्य च जीवन्मुक्तस्य आधिकारिकपुरुषस्य महाप्रलये सत्यलोकविनाशे विदेहमुक्तिः । उपासकानामपि तेन सह विदेहमुक्तिरिति । अथवा भाष्ये तदध्यक्षेण हिरण्यगर्भेण सह इत्येतत् वैकुण्ठकैलासाद्यध्यक्षविष्णुशिवादितत्तत्सगुणब्रह्ममूर्तिभेदोपलक्षणम्"—इत्यादि विवृण्वतां श्री पि· एस्· रामशास्त्रिमहोदयानामन्नम्भट्टमिताक्षराप्रास्ताविककर्तॄणां वचनान्यपि सस्पृहमुपादेयानि ।

तच्चापरं ब्रह्म "यमाग्निमुख्या देवाः स्युः ज्ञाताविन्द्रबृहस्पती प्रजापतिर्विराट् प्रोक्तो ब्रह्मा सूत्रात्मनामकः" इति ब्रह्मानन्दगविद्यानन्दप्रकरणे पञ्चदश्यामभिहितम् ।

प्रौढमनोरमारम्भे च सर्वजगदुपादानभूतं परं ब्रह्मेति (सगुणम्) निर्गुणन्तु तुरीयम् अपरं ब्रह्म हिरण्यगर्भो जीवः इति व्याख्यातम् ।

ईक्षतिकर्मव्यपदेशात्सः १·३-१३ इति सूत्रे च हरिदीक्षितेन अपरं ब्रह्म हिरण्यगर्भः इत्युक्तम् अन्यत्र च हिरण्यगर्भबुद्धिः महच्छब्दवाच्या इत्युक्तम् ।

तथा च हिरण्यगर्भशब्दः परमपुरुषे अर्थात् नारायणे जगदन्तरात्मनि सङ्गतः चतुर्मुखेऽपि प्रयुक्तो दृश्यते ।

तत्र पुनः प्रथमो जीवः किं चतुर्मुखः अथवा तदितरः सूत्रात्मा हिरण्यगर्भ इति प्रश्ने, समस्तसृष्टयपेक्षया हिरण्यगर्भ एव भवति यश्चतुर्मुखस्यापि मूलभूतः । चतुर्मुखोऽपि प्रथमजीवो भवति तदनन्तरभाविविपुलसृष्टयपेक्षया । अत एवानयोः भेदेनाभेदेन च व्यवहाराः दृश्यन्ते । उक्तं खलु पञ्चदश्याम् :-

सर्वतः पाणिपादत्वे कृम्यादेरपि चेशता ।
ततश्चतुर्मुखो देव एवेशो नेतरः पुमान् ॥
विष्णोर्नाभेः समुद्भूतः वेधाः कमलजस्ततः ।
विष्णुरेवेश इत्याहुः लोके भागवता जनाः" इति ।

"प्रजापतिः विराट् प्रोक्तो ब्रह्मा सूत्रात्मनामकः" । इति पूर्वोक्तवचनेन च ब्रह्मशब्दः सूत्रात्मन्यपि प्रयुक्तः । तथैव श्रीमद्भागवते दशमस्कन्धे अष्टाविंशाध्याये "ते तु ब्रह्महृदं नीता मग्नाः कृष्णेन चोद्धृताः ददृशु ब्रह्मणो लोकं यत्राक्रूरः अध्यगात् पुरा" इति एकादशस्कन्धे चतुर्विंशाध्याये पूर्वोक्तरीत्या च हिरण्मयाण्डसम्भवः नारायणः एव हिरण्यगर्भः ब्रह्मपितामहपदाभ्यामभिहितः । "तत् सृष्ट्वा तदेवानुप्राविशत्" इति श्रुत्या च ब्रह्माण्डसृष्टिकर्तुः चतुर्मुखस्य तन्मूलभूतस्य नारायणस्य चाभेदः वर्तत एव । आत्मभूः ब्रह्मा स्वयम्भूः पितामहः (मनुस्मृतौ) भगवान् इति शब्दाः नारायणे प्रयुक्ता द्रष्टव्याः । तथैव हिरण्यगर्भशब्दः परमात्मनि रूढः चतुर्मुखेऽपि प्रयुक्तः दृश्यते ।

देवीभागवतानुसारेण महाविराजः प्रतिरोमकोटिशः ब्रह्माण्डानि जायन्ते । ब्रह्मा तपस्तप्त्वा स्वजनयितारं क्षुद्रविराजं ददर्श महाविराजं च दृष्ट्वान् । ब्रह्मणो ललाटात् श्वेतद्वीपवासी विष्णुः समभूदिति ज्ञातव्यम् । क्षुद्रविराट् च नारायणः कमलनाभः प्रथमजीवो हिरण्यगर्भः। तत्सुतः चतुर्मुखः कमलयोनिः विष्णुरुद्रयोः जनयिता त्रिमूर्तिष्वन्यतमः ।

"परमेश्वर एकोऽपि सोपाधिभूनमायानिष्ठसत्वरजस्तमोगुणभेतेन ब्रह्मविष्णुमहेश्वरादिशब्दवाच्यतां भजते । एतेन ब्रह्मादीनां त्रयाणां न जीवत्वम्, किन्तु ईश्वरस्यैव गुणभेदेन नामभेदः इति प्रतिपादितम्" इति वेदान्तपरिभाषाव्याख्या च ग्राह्या ।

जीवसमष्टिस्वरूपात् हिरण्यगर्भादेव सृष्टिरिति तस्मिन्नेव प्रलयः स्यादिति सचान्ततः परब्रह्मणि लीयते इति श्रीमद्भागवते चोक्तम् । तदनुसारेण चतुर्मुखस्य हिरण्यगर्भस्य चैक्यप्रतिपादनेऽपि न क्षतिः । कुत्रचिदन्यत्रापि चतुर्मुखस्य हिरण्यगर्भस्य चाभेदो वर्णितः पर्यायपदमत्या समप्राधान्यविवक्षया वा स्यात् । समानत्वं च तुल्यास्यप्रयत्नं सवर्णमिति व्याकरणसूत्ररीत्या अभिन्नत्ववाचकं भवति । तद्भिन्नत्वे सति तद्गतभूयोधर्मवत्त्वमिति नैयायिकप्रकारेण च भिन्नत्वेपि सम्भवति । उभयथापि न क्षतिः यतः कल्पानामानन्त्यं पुराणेष्वङ्गीकृतम् । उच्यते खलु ललितासहस्रनामावल्याम्, "उन्मेषनिमिषोत्पन्नविपन्नभुवनावल्यै नमः" इति । अनन्तशतकोटिकल्पविशेषेषु हिरण्यगर्भस्य चतुर्मुखस्य च नामरूपभेदस्य पौर्वापर्यस्य वा सम्भवादद्वैतमायावादे न विवादविषयः प्रधानोऽयं भवति ।

आत्मन आकाशः सम्भूतः इति तैत्तिरीयके, तत्तेजोऽसृजत इति छान्दोग्ये, लोकानसृजत इत्यैतरेयके, एतस्माज्जायते प्राणः इति मुण्डके, इत्याकारेण कार्ये परस्परविरोधोऽपि "कारणत्वेन चाकाशादिषु यथाव्यपदिष्टोक्तेः १-४-१४ इति सूत्रेण कारणे तावत् विगानं नास्तीत्युच्यते । आकाशादिषु यथा भूतईश्वरः एकस्मिन् वेदान्ते सर्वज्ञः सर्वेश्वरः

कारणत्वेन व्यपदिष्टः तस्यैव शाखान्तरे उक्तेः न विगानम्। परब्रह्मणि हिरण्यगर्भस्य चतुर्मुखस्य वा समन्वयस्सम्भवतीत्यविरोधः सिद्धः।

जन्माधिकरणे च आद्यस्य ब्रह्मणः चतुर्मुखस्य यतो जन्म तद् ब्रह्म इति केषांचित् सूत्रवर्णनप्रकारमुद्दिश्य श्रीमदप्पयदीक्षितैः न्याय-रक्षामणावुल्लिखितम् "केचिदाद्यस्य हिरण्यगर्भस्य जन्म यत इति सूत्रं योजयन्ति। सोऽप्यर्थः मूलभूतं लक्षणवाक्यं हिरण्यगर्भपरमिति शङ्कानि-रासार्थत्वेन सूत्रावृत्त्या विवक्षितुं शक्यते इति नोपेक्षणीयः" इति। तथा चास्मिन् सन्दर्भे अन्नम्भट्टमतापेक्षया अप्पयदीक्षितोक्तः प्रकारः स्पृहणीय-श्चकास्ति।

(०)

# अविद्यानिवृत्तिः

समन्वयाधिकरणे वेदान्तानां प्रयोजनवत्कर्मशेषत्वं वक्तव्यमिति पूर्वपक्षः उत्थापितः । तस्य च तात्पर्यमेतदेव यत् सिद्धब्रह्मप्रतिपादने प्रयोजनाभावः इति । न तथा, अविद्यानिवृत्तिः प्रयोजनमित्युत्तरः पक्षः। अखिलं ब्रह्मेति सिद्धान्ते सति तद्भिन्ना अविद्यानिवृत्तिः कथं स्यात् कथं वा प्रयोजनं स्यात् इति प्रश्नः उदेति ।

अविद्यानिवृत्तिः ननु ब्रह्मभिन्नैवेति प्राप्ते, सत्या मिथ्या वा इति विचार्यते । अविद्यानिवृत्तिः ब्रह्मभिन्ना सत्येत्युक्तौ ब्रह्माद्वितीयं न भवेत् । अविद्यानिवृत्तिः ब्रह्मभिन्ना मिथ्या च यदि स्यात् तर्हि अविद्यानिवृत्त्या लब्धो मोक्षः असत्यः स्यात् अर्थात् पुनः संसारापत्तिप्रसङ्गः ।

अविद्यानिवृत्तिः ब्रह्मणः अभिन्नेतिवचने ब्रह्मणः नित्यसिद्धतया अविद्यानिवृत्तिरपि नित्यसिद्धैव, तदर्थं प्रवृत्तिश्च न स्यात्, संसारस्य मोक्षस्य च भेदो न भवेत् यतो हि ब्रह्म सर्वदा सर्वसिद्धम् ।

एवं स्थिते, पूर्वपक्षं नशब्देनपराणुद्य, अविद्यानिवृत्तिः ब्रह्मभिन्ना इति समाधीयते :-

ब्रह्मभिन्ना स्यादिति आपत्तिः या अभ्यूहिता तन्निरासः क्रियते अद्वैतहानिः न स्यादिति। पञ्चमप्रकारत्वाङ्गीकारात् संशयविपर्ययतर्कानिर्वचनीयख्यातिभिन्नत्वेन स्वीकारादित्यर्थः ।

1 सिद्धान्तलेशसंग्रहे तु चतुर्थपरिच्छेदे प्रथमभागे एवमुक्तम् :- "आत्मन्यैवाविद्यानिवृत्तिः । सा च न सती अद्वैतहानेः, नाप्यसती ज्ञानसाध्यत्वायोगात्; नापि सदसद्रूपा 2 विरोधात्, नाप्यनिर्वाच्या अनिर्वाच्यस्य सादेः अज्ञानोपादानकत्वनियमेन मुक्तावपि तदुपादानाज्ञानानुवृत्त्यापत्तेः ज्ञाननिवर्त्यत्वापत्तेश्च । किन्तूक्तप्रकारचतुष्टयोत्तीर्णा पञ्चमप्रकारा इत्यानन्दबोधाचार्याः" इति ।

2. सत्यैव वा नाद्वैतहानिरिति। एतदुक्तं भवति अद्वैतम् भाव-स्वरूपम्। अविद्यानिवृत्तिश्च अविद्याया अभावः एव। अभावः किं ब्रह्म-भिन्नो भवति इति प्रश्ने, ओमिति ब्रूमः। सर्वं खल्विदं ब्रह्म इत्यद्वैत-श्रुतिः तमेव विदित्वा अतिमृत्युमेति, सोऽविद्याग्रन्थिं विकिरतीह सोम्य, तरति शोकमात्मविद् इति मोक्षप्रतिपादकश्रुतयश्च प्रमाणम्। तदनुसारेण अविद्या नाम संसारः यो मिथ्याभूतः, तन्निवृत्तिः मिथ्याभावस्याभावः भावस्वरूपं ब्रह्म। संसारमोक्षो नाम भावात्मकब्रह्मप्रतिपत्तिः सैवा-विद्यानिवृत्तिरिति।

3.(अ) अन्ये तु अविद्यावत् तन्निवृत्तिः अनिर्वचनीयेति वदन्ति अस्मिन् पक्षे अविद्या अनिर्वचनीया, अविद्याया मूलमुपादानकारणमप्यनिर्वचनीयम् कार्ये घटे नष्टेऽपि यथा मृत्तिका वर्तते, तथैव अविद्यानिवृत्तावपि तदुपादानतया मूलाज्ञानस्य अनिर्वचनीयस्यानुवृत्तौ संसारानुवृत्तिः स्यादिति प्राप्तम् :

अत्रोच्यते :— चरमसमयसम्बन्धी भावविकार एव ध्वंसः नत्व-भावः। एवमुत्पत्तिरपि आद्यसमयसंसर्गो क्षणिको भावविकार एव। युक्तिसहं चैतद्वचनं प्रतीयते। तथाहि, सादिरनन्तः प्रध्वंसाभावः इति सिद्धान्तानुसारेण चिरविनष्टेऽपि घटे ध्वंसस्य सत्त्वात् घटो नश्यतीति प्रयोगापत्तिः। ध्वंसस्य चरमक्षणसम्बन्धित्वपक्षे तु तादृश्यापत्तिः नास्ति। आख्यातः यथा कर्तृनिष्ठसंख्यामभिदधाति तथैव कर्तृनिष्ठवर्तमानादि-कालमभिदधाति। तथा च नष्टे घटे वर्तमानकालस्याभावात् ध्वंसस्य (नित्यत्वेऽपि) अनन्तत्वेऽपि कर्तुः घटस्य वर्तमानकालिकत्वाभावात् घटो नश्यतीति प्रयोगः नापद्यते—इत्युच्यते चेत्

न युज्यते, चिरोत्पन्नेऽपि घटे इदानीमुत्पद्यते इति प्रयोगापत्तिः तदवस्था। उत्पन्ने घटे वर्तमानकालस्य सत्त्वात् घटः उत्पद्यते इत्येव व्यवहारः स्यात् कर्तुः घटस्य वर्तमानकालिकत्वात्। तादृशव्यवहारस्या-

भावात् घट उत्पन्नः इत्येव प्रसिद्धेः, इदमङ्गीक्रियतां यदुत्पत्तिः आद्य-समयसंसर्गी क्षणिको भावविकारः ध्वंसश्च चरमसमयसम्बन्धी भावविकार इति ।

ध्वंसः यदि क्षणिकः तर्हि चिरध्वस्ते घटे, घटः इदानीं नास्तीति प्रयोगः कथं स्यात् इत्याक्षेपे सति इदमुच्यते :-

भूतले घटो नास्तीति प्रयोगे, भूतलापेक्षया घटाभावं यथा वदन्ति तथा तत्कालापेक्षया अभिहितस्सामयिकाभावः युज्यते । "तत्तत्कालीनं तत्तद्भूतलादिकं तत्तदभावानां च सम्बन्धः" इति मुक्तावल्याम् । तत्-क्षणावच्छिन्नसमयमुद्दिश्य घटो नास्तीति व्याहारः चिरविनष्टेऽपि घटे उपपद्यते एव ।

तर्हि प्रागभावस्य का गतिः? घटोत्पत्तिपूर्वक्षणावच्छिन्नसामयिका-भावेनैव गतार्थत्वात् इत्युक्तौ तथास्तु इतीष्टापत्तिरेव ।

3. (आ) वस्तुतस्तु इत्युपक्रम्य प्रकारान्तरमाश्रीयते :- ध्वंसः भावविकारो न भवति तथापि नित्यो न भवति । अनेकघटादिध्वंसाः नित्या इति वचने प्रयोजनाभावात् । नित्यत्वेन अभिमतं सर्वं यावदविद्यमेवावतिष्ठते अविद्यानिवृत्तौ निवर्तते इत्यङ्गीकर्तव्यम् । एतेन अनन्तवस्तूनां ध्वंसात्यन्ताभावान्योन्याभावानां स्थित्यङ्गीकारगौरवमपास्यते । तथा च नित्यत्वेनाभिमतः अविद्याध्वंसः अविद्यानिवृत्तौ नावतिष्ठते, अविद्यया साकं ध्वंसोऽपि नश्यति इत्युक्तं भवति ।

ध्वंसप्रागभावानाधारकालस्य प्रतियोग्याधारत्वनियमस्तु नात्राभि-मन्यते, अप्रयोजकत्वात् अनन्तशतकोटिवस्तूनां पुनस्सन्निधानकल्पने अविद्यानिवृत्तौ न किञ्चित् प्रयोजनम् इति बुद्धया । तस्मादविद्या-ध्वंसनाशे अविद्यायाः पुनः नोत्थानशङ्का ।

भावविकारो भवतु मा वा अविद्याध्वंसस्तु क्षणिक इत्यङ्गीक्रियते अविद्यानिवृत्तिभीतेः । अविद्यानिवृत्तेः क्षणिकत्वे स्थिरपुरुषार्थत्वं न

स्यादिति हेतोः, अविद्यानिवृत्तिः स्वतः पुरुषार्थो न भवति, अविद्यानिवृत्ति-द्वारा सांसारिकदुःखनिवृत्तिः निरतिशयानन्दस्फुरणं च भवतीति तदुपयोगि-तया अविद्यानिवृत्तेः ज्ञानसाध्यत्वमङ्गीक्रियते। दुःखनिवृत्तेः क्षणिकत्वेऽपि निरतिशयानन्दस्फुरणस्य अनपायित्वात् पुरुषार्थत्वं सेत्स्यति। इदानीं निरतिशयानन्दस्फुरणं नास्तीति अविद्यावरणं कल्प्यते इति तृतीयः पक्षः।

4. इतरे तु अविद्यानिवृत्तेः ब्रह्मस्वरूपत्वेऽपि साध्यत्वं सम्भवतीति वदन्ति। यत्सत्त्वे ज्ञानस्य सत्त्वे, अविद्यानिवृत्तिरूपब्रह्मसत्त्वम् यदभावे ज्ञानस्य अभावे, अज्ञाननिवृत्त्यभावः अर्थात् अविद्यावरणं ब्रह्मणः अस्फुरण-मिति प्रागभावपरिपालनन्यायेन साध्यत्वं अविद्या निवृत्तेः वर्णयन्ति। अस्मिन् पक्षे अविद्यानिवृत्तिः नित्यः पुरुषार्थस्सम्भवति अभावश्च न भवति। अविद्यानिवृत्तेः साध्यत्वकल्पना च समीचीनैव। तथापि "ब्रह्मणो नित्य-सिद्धतया प्रवृत्त्यनुपपत्तेः, मुक्तिसंसारयोरविशेषप्रसङ्गाच्च" इति यत् पूर्वमुदीरितं तत् तदवस्थाम्। ततः तत्समाधानाय मुक्तः प्रतिज्ञानात् ४-४-२ इति सूत्रस्य व्याख्यायां हरिदीक्षितोक्तमत्रोदाह्रियते :— फलत्वप्रसिद्धिरपि मोक्षस्य बन्धनिवृत्तिमात्रापेक्षा, नापूर्वोपजनापेक्षा इति भाष्यम्। भाष्यस्यायमाशयः :— नन्वज्ञाते कामनानुदयात् ज्ञाते आत्मनि कामना वाच्या। तथा च कथमहेयानुपादेये नित्यसिद्धे आत्मनि सा भवतु, सिद्धे इच्छाविरहात् संसारावस्थायामपि मोक्षापत्तेश्च। न च संसारावस्थायामविद्यावृतत्वात् विद्यमानोऽप्यद्वयानन्दो न भासते, विद्यया त्वविद्यायां निवृत्तायां स्वप्रकाशत्वादानन्दरूपेण स्वयमेव प्रथते इत्यविद्या-निवृत्तिविशिष्टत्वेन काम्यते इति वाच्यम्। सा चाविद्यानिवृत्तिः ब्रह्मणः अभिन्ना चेत् नित्यसिद्धे इच्छाविरहः इत्युक्ता नुच्यते – न सिद्धमात्रेणात्म-नीच्छाविरहः। सिद्धत्वं हि सत्त्वं वा ज्ञायमानत्वं वा अप्रतिबद्ध-साक्षात्कारत्वं वा? नाद्यः, विस्मृतग्रैवेयकप्राप्तौ व्यभिचारात्। अत एव न द्वितीयः तस्येच्छाप्रयोजकत्वात्। तृतीयस्तु भवतीच्छापरिपन्थी। स तु प्रकृते नास्ति असम्भावनादिप्रतिबन्धात्। अत एव पित्तदूषितरसनस्य शुद्धसितामश्नतः मधुरत्वेन तां जानतोऽपि न माधुर्यनिमित्ततृप्ति

विशेषोऽस्ति पित्तदोषेण माधुर्यसाक्षात्काराभावात्। तथा च द्विविधमिष्टम्। वस्तुतः अप्राप्तं ग्रामादि, प्राप्तमपि भ्रमव्यवहितं कण्ठचामीकरादि। एवं परिहार्यमपि द्विविधम्- वस्तुतः अपरिहृतं कूपादि सर्वदा परिहृतं रज्जुभुजङ्गादि भ्रममात्रादपरिहृतमिव। तत्राद्ययोः क्रियाव्यवधानौ प्राप्तिपरिहारौ। द्वितीयौ साक्षात्कारसाध्यौ। अत्रैव च परमपुमर्थं मन्यन्ते क्रियाव्यवहाराभावात्" इति। एतावता प्रबन्धेन नित्यसिद्धेऽपि ब्रह्मणि प्रवृत्त्युपपत्तिः प्रदर्शिता। तथाचान्ततोगत्वा पञ्चदशी। अविद्यानिवृतौ नित्यसिद्धायामपि प्रतिबद्धसाक्षात्कारत्वेनासम्भावनादिप्रतिबन्धात् प्रवृत्त्युपपत्तिः। दृष्टानु- सारित्वात् कल्पनायाः, मुक्तिसंसारयोरविशेषप्रसङ्गश्च न स्यात्।

प्रोक्तः श्लोक एष मननपथमवतरति :—

प्रत्यगेव परानन्दः तिरोभूतः स्वमोहतः।

स्वकण्ठचामीकरवत् प्राप्तप्राप्यः स्वविद्यया" इति।

इयं चाविद्या द्विविधा मूलाविद्या तूलाविद्याचेति। उक्तं हि लघुमञ्जूषायाम् :-

भ्रमात् संस्कारतोऽप्यन्या
मण्डूकमृदुदाहृतेः।
अविद्यानादिभावात्मा
माता वाचस्पतेरिह॥ इति।

सूत्रभाष्यकृतोः भ्रमतत्संस्काररूपैवाविद्येति मतमनेन सूचितम्। मूलाविद्या सूक्ष्माविद्या सैव वासनारूपा, तूलाविद्या स्थूलविद्या भ्रमरूपा। आवरणविक्षेपशक्तिमत्याः मूलाविद्यायाः प्रारब्धकर्मवर्तमानदेहाद्यनुवृत्तिप्रयोजको विक्षेपशक्त्यंशः इति केषांचिन्मतं सिद्धान्तलेशसंग्रहे उल्लेखितम् सत्यस्य ब्रह्णस्तिरोधानमावरणशक्त्या क्रियते, विक्षेपशक्तिश्च ब्रह्माण्डानि भावयति। ईदृगविद्याधीनो जीवश्च संभ्रम्यते संसारे, ईश्वरस्तु वशीकृत्यैनां क्रीडति। "मायां तु प्रकृतिं विद्यात् मायिनं तु महेश्वरम्" "इन्द्रो मायाभिः पुरुरूपईयते" इति वचनाभ्यां परमेश्वरस्य माया महिममयी

जोगीयते । एकैत्र सा बहुशक्तिशालितया मायाभिः इति बहुवचने-नेङिता । तदधीनो जीवः अज्ञानवशगस्सन् जनिमृतिचक्रे परिभ्रमति । तदेतदज्ञानमेवाविद्या प्रोच्यते, अनाद्यनेकजन्मवासनालक्षणा मूलाविद्या लक्ष्यते, क्षालितेष्विव हिङ्ग्वादिपात्रेषु वासनाक्षालितलशुनभाण्डानुवृत्त-लशुनवासनाकल्पः अविद्यासंस्कारः इति चोद्भावितं सिद्धान्तलेशसंग्रहे । तथा च बहुलजनिकारणं मूलाज्ञानं मूलाविद्या स्यात्, बहुविधजन्मप्रारब्ध-लक्षणं च अज्ञानं स्थूलाविद्या स्यात् । जीवो यावता आत्मानं ब्रह्मतः पृथक् भावयति तावता कालेनाविद्यापाशवशवर्ती स्यादेव । ईदृशी चाविद्या सती वा सतीवेति विचार्यमाणे वस्तुनः ब्रह्मणः अन्यस्यासम्भवात् अविद्या तदभिन्ना अविद्यानिवृत्तिरपि तदभिन्ना । तर्हि कस्येयमविद्या इति प्रश्न-मुत्थाप्य समादधति श्रीशङ्करभगवत्पूज्यपादाः भगवद्गीताभाष्ये त्रयोदशा-ध्याये द्वितीयश्लोके :–

"अत्राह सा अविद्या कस्येति । यस्य दृश्यते तस्यैव, कस्य दृश्यते इति । अत्रोच्यते अविद्या कस्य दृश्यते इति प्रश्नो निरर्थकः । कथं दृश्यते चेदविद्या तद्वन्तमपि पश्यसि । न च तद्वत्युपलभ्यमाने सा कस्येति प्रश्नो युक्तः । न हि गोमत्युपलभ्यमाने गावः कस्येति प्रश्नोऽर्थवान् भवेत् । ननु विषमो दृष्टान्तः । गवां तद्वतश्च प्रत्यक्षत्वात् सम्बन्धोऽपि प्रत्यक्षः इति प्रश्नो निरर्थकः । न तथा अविद्या, तद्वांश्च प्रत्यक्षौ यतः प्रश्नो निरर्थकः स्यात् । अप्रत्यक्षेणाविद्यावता अविद्यासम्बन्धे ज्ञाते किं तव स्यात् ? अविद्याया अनर्थहेतुत्वात् परिहर्तव्यता स्यात् । यस्य अविद्या स तां परिहरिष्यति । ननु ममैवाविद्या । जानासि तर्हि, अविद्यां तद्वन्तं चात्मानम् । जानामि न तु प्रत्यक्षेण । अनुमानेन चेज्जानासि कथं सम्बन्धग्रहणम् ? न हि तव ज्ञातुः ज्ञेयभूतया अविद्यया तत्काले सम्बन्धो ग्रहीतुं शक्यते, अविद्याया विषयत्वेनैव ज्ञातुरुपयुक्तत्वात् इति ।

तथा च यावता कालेन बद्धोऽस्मि इति भावयति तावन्तं कालं बद्ध एव तिष्ठति यस्मिन् सुकृतपरिपाकक्षणे आत्मानमद्वितीयं जानाति

तस्मिन्नेव क्षणे सपदि बन्धहानिः अर्थात् अविद्यानिवृत्तिः भवति । एषा च वचनपरिपाटी भ्रान्तिमनुसृत्यैव । वस्तुतस्तु एकमेवाद्वितीयं परं ब्रह्म यतः नाविद्या न वा अविद्यानिवृत्तिः भिन्ने सम्भवतः ।

अत एवोच्यते विवेकचूडामणौ :-

न निरोधो न चोत्पत्तिः
न बद्धो न च साधकः ।
न मुमुक्षुः न वै मुक्तः
इत्येषा परमार्थता ।।" इति ।।

(०)

# मनसः इन्दियत्वम्

इन्द्रियाणि पराण्याहुः इन्द्रियेभ्यः परं मनः ।
मनसस्तु परा बुद्धिः यो बुद्धेः परतस्तु सः ।। ३-४-२

इत्यादिषु श्लोकेषु इन्द्रियेभ्यः पृथक्तया मनसो ग्रहणेन मनः अनिन्द्रियमिति केचिदभिप्रयन्ति । तन्न । मनसः अन्तरिन्द्रियस्य प्राधान्यात् सर्वेन्द्रियाणां च मनोद्वारा व्यवहारदर्शनात्, गोबलीवर्दन्यायेन प्राशस्त्यसूचकः पृथक्व्यवहारः मनसो नानिन्द्रियत्वद्योतकः ।

वेदानां सामवेदोऽस्मि देवानामस्मि वासवः ।
इन्द्रियाणां मनश्चास्मि भूतानामस्मि चेतना १०-२२

इति श्लोके इन्द्रियाणामन्यतमत्वेन मनः विवक्षितमिति सर्वैरङ्गीकर्तव्यम् । सामवेदस्यापि वेदत्वात् वासवस्यापि देवत्वादिति ।

ममैवांशो जीवलोके जीवभूतस्सनातनः ।
मनष्षष्ठान्णीद्रयाणि प्रकृतिस्थानि कर्षति । १५-१६

इति श्लोके च भगवता मनसः इन्द्रियत्वं पुनरेकवारं दृढीकृतम् । तच्चनिराकृतं वेदान्तपरिभाषायां धर्मराजाध्वरीन्द्रेण । "अनिन्द्रियेणापि मनसा व्यवहारो युज्यत एव, यदमानपञ्चमा इडां भक्षयन्ति इत्यादिवत्" इति उपमानसाम्यं पुरस्कृत्य मनसः इन्द्रियभिन्नत्वं साधितं परिभाषायाम् । प्रयोगास्तु सम्भवन्त्येव भिन्नवस्तुना, संख्यापूरणे, किन्तु भिन्नवस्तुनैव संख्यापूरणं कर्तव्यम् इति नियमो नास्ति । अनिन्द्रियेणैवेन्द्रियसंख्यापूरणमिति वेदाज्ञाया अभावात् "इन्द्रियाणां मनश्चास्मि" इत्यन्यस्मिन्नध्याये भगवतैवोक्तत्वात् तदालम्बेन, मनष्षष्ठानि इति वचनं मनसः इन्द्रियत्वमेव व्याचष्टे इति साधीयान् पक्षः ।

किं च मनः इन्द्रियं न स्याद्यदि किं स्यादिति तेन नोपपादितम्। अपि च कर्मेन्द्रियज्ञानेन्द्रियद्वारा अनिन्द्रियस्य मनसो व्यापारः नोपपद्यते ।

अन्तःकरणमिति संज्ञयैवान्तरिन्द्रियं मनः इति सिद्धं करणशब्द-स्येन्द्रियवाचकत्वात् ।

"कामः संकल्पो विचिकित्सा श्रद्धा अश्रद्धा धृतिरधृतिः ह्रीः धीः भीः इत्येतत् सर्वं मन एव" इति श्रुतिर्मानम् । धीशब्देन वृत्तिरूपज्ञाना-भिधानात् । कामादेरपि मनोधर्मत्वम् । ननु कामादेरपि मनोधर्मत्वे अहमिच्छाम्यहं जानाम्यहं बिभेमीत्याद्यनुभवः आत्मधर्मत्वमवगाहमानः कथमुपपद्यते ? उच्यते । अयःपिण्डस्य दग्धृत्वाभावेऽपि दग्धृत्वाश्रय-वह्नितादात्म्याध्यासादहं सुखी अहं दुःखीत्यादि व्यवहारो जायते" इति वेदान्तपरिभाषायाम् । सम्भवेत् । अन्तःकारणस्य तु इन्द्रियतया प्रत्यक्ष-विषयत्वमेव न सम्भवति तत्कथं प्रत्यक्षानुभवविषयत्वमात्मगतत्वेनाध्यासः इत्युच्यते इत्याशङ्कते । यद्यदिन्द्रियं तत्तदतीन्द्रियं यथा चक्षुरादि । ततश्च अन्तःकरणमतीन्द्रियं इन्द्रियत्वात् चक्षुरादिवत् इत्यनुमानबलात् अन्तःकरणस्यातीन्द्रियत्वसिद्धिः । तत्सिद्ध्या च प्रत्यक्षानुभवविषयत्वं न सम्भवतीत्याशयः" इति परिभाषाव्याख्यायाम् ।

अस्माभिस्तु एवं चिन्त्यते :-

बुद्धितत्स्थचिदाभासौ<br>
द्वावेतौ व्याप्नुतो घटम् ।<br>
तत्राज्ञानं धिया नश्येत्<br>
आभासेन घटः स्फुरेत् ॥" इति पञ्चदशीतः ।

एतदनुसारेण "अयं घटः" इति ज्ञानं चिदाभासात् जायते । चिदाभास एव बुद्धिवृत्त्याकारतां भजते । बुद्धिवृत्तिः धीः मन ज्ञानम् इत्येतानि पर्यायाः स्युः । "घटमहं जानामि" इत्यनुव्यवसायश्च चिन्मात्रं द्योतयति ।

न जानामीत्यज्ञानस्य साक्षिभूतं, चित्तत्वं सर्वान्तर्यामिस्वरूपमनुव्यवसाय-पदेन परमप्रामाणिकमुपयन्ति शास्त्रकाराः। "मत्तः स्मृतिः ज्ञानमपोहनं च" इति भगवद्गीतास्वपि सुष्ठु इदमेव स्वरूपमुक्तम्। अतश्च अन्तः-करणमतीन्द्रियम् इन्द्रियत्वात् इत्याकारकमनुमानमन्तःकरणस्य अनिन्द्रियत्वसाधनाय न प्रयोज्यम्। अन्तःकरणं स्वस्य प्रत्यक्षं न भवति। किन्तु साक्षिभास्यं भवति। अहमिच्छामि अहं जानामि इत्यत्र अन्तःकरणे आत्माध्यासः। चिदात्मनि चित्तत्वभ्रान्तिः परिकल्पिता। आत्मनः यथार्थस्वरूपस्य लोके अविनिश्चितत्वात् अव्यवस्थितव्याहाराः दृश्यन्त एव। पञ्चदश्यां कूटस्थदीपे

चैतन्यं द्विगुणं कुम्भे ज्ञातत्वेन स्फुरत्यन्तः
अन्येऽनुव्यवसायाख्यमाहुरेतत् यथोदितम्।
घटोऽयमित्यसावुक्तिराभासस्य प्रसादतः
विज्ञातो घट इत्युक्तिः ब्रह्मानुग्रहतो भवेत्" इत्युक्तम्।

ततः घटमहं जानामि अहमिच्छामि इत्यादिकं साक्षिभास्यं ज्ञानम्। मन एव तत्र मानसं प्रत्यक्षं न कलयति। इन्द्रियं मनः स्वस्य प्रत्यक्षविषयः न भवति। अतश्च मनसः इन्द्रियत्वनिरासायासो वृथा। प्रमातृचैतन्यं यदङ्गीकृतं वेदान्तपरिभाषाकारेण तत् साक्षिचैतन्यं चिदभिन्नमित्यस्माक-माशयः। "अयःपिण्डस्य दग्धृत्वासम्भवेऽपि दग्धृत्वाश्रयवह्नितादा-त्म्याध्यासात् यथा अयो दहतीति व्यवहारः तथा सुखाद्याकारपरिणाम्यन्तः करणैक्याध्यासादहं सुखी अहं दुःखीत्यादिव्यवहारो जायते" इति पूर्वोक्तिरित्थं विविच्यते :-

मनः जानाति-- इति वचनं अयो दहति इति वचनेनोपमेयम्। ज्ञानं चिदाभासः। दाहश्चाग्निधर्मः। नत्वयसः। किन्तु प्रत्यक्षे अहं जानामीत्याकारकचित्तवृत्तौ, मनुजः आत्मनि मनोऽध्यासं वहति, न तु मनसि आत्मा अध्यस्यते अयसि अग्निरिव। अयो दहतीत्यादिकस्य अयं घटः इत्याकारकज्ञानमुपमानं भवितुमर्हति। वस्तुतः चिदाभासस्य

व्याप्तिमपह्नुत्य, वह्नेः दाहंचापोह्य, जडे अयसि मनसि च दाहस्य ज्ञानस्य चारोपात्। यत्र पुनः घटमहं जानामीत्युक्तं तत्रेन्द्रियस्य मनसः प्रत्यक्षं, प्रमातृचैतन्यात् चिदभिन्नात् भवति। तदा अहं सुखीत्याकारकवाक्येन अहंप्रत्ययगोचरे चिदभिन्ने प्रमातरि पूर्वरीत्या मनस्यध्यस्ता अहंवृत्तिः आरोप्यते। चित् चिदाभासः बुद्धिः मनः इति चतुष्टये चित् प्रमातृचैतन्यं स्यात् यस्य स्फूर्तिः अनुव्यवसायरूपा। चिदाभासश्च विषयज्ञानाकारः। बुद्धया चाज्ञानं नश्यति बुद्धेः कामसंकल्पविचिकित्साद्याकारा वृत्तिः मन इतीर्यते। वेदान्तपरिभाषायां "इन्द्रियेभ्यः पराह्यर्थाः अर्थेभ्यश्च परं मनः" इत्येतावन्मात्रमुपादाय पृथङ्निर्देशो मनस उपात्तः न परितोषं कल्पयति। आन्तरतमत्वमेतेषां प्रतिपादयति भगवान् यथोत्तरम् "मनसस्तु परा बुद्धिः यो बुद्धेः परतस्तु सः" इत्युत्तरार्धं चोपादेयम्। मनसश्च प्रत्यक्षत्वं ततोऽप्यन्तरमस्य साक्षिणः सकाशात् इति च ग्रहीतव्यम्। बुद्धिः इन्द्रियार्थान् मनोद्वारा गृह्णाति निगृह्णाति च। उक्तं खलु गीतायाम् :- "आत्मानं रथिनं विद्धि शरीरम् रथमेव च, बुद्धिं तु सारथिं विद्धि मनः प्रग्रहमेव च" इति। न च हयानां प्रग्रहस्य च पृथक्तया "इन्द्रियेभ्यः पृथगेव मनः इति वाच्यम्, उपमाने हयसदृशेन्द्रियनियमनमात्रस्य विवक्षितत्वात्।

रागद्वेषवियुक्तैस्तु विषयानिन्द्रियैश्चरन्।

आत्मवश्यैर्विधेयात्मा प्रसादमधिगच्छति" इति श्लोके रागद्वेषवियुक्तैरिन्द्रियैरिति वचनेन मनः अतिस्पष्टतया इन्द्रियाणामन्यतमं भवति। विना खलु मनः चक्षुरादीनामिन्द्रियाणां रागद्वेषौ न सम्भवतः। न केवलमेतावता मनस्सान्निध्यमिन्द्रियव्यापारे अपेक्ष्यते इत्युक्तम् अपितु मनोव्यापारं विना इन्द्रियज्ञानमप्यसम्भावितम्। "अन्यत्रमना अभूवम्, नाश्रौषम्, नादर्शम् इत्याद्यनुभवानुरोधात् प्रधानेन्द्रियं मन एव तत्तदिन्द्रियद्वारा विषयान् भुङ्क्ते। अत एव च "इन्द्रियाणां मनश्चास्मि" इति पूर्वोक्तमुपपन्नम्। तस्मात् यथा यथा चिन्त्यते तथा तथा मनसः इन्द्रियत्वमनपास्यम्।

वेदान्तपरिभाषायां प्रदर्शिता च विप्रतिपत्तिरेवं दूरीक्रियते :-

"अनुमित्यादेरपि मनोजन्यतया साक्षात्त्वापत्ते." इत्यारोपिता अतिव्याप्तिः करणभेदेन परिह्नियते नैयायिकैः। ईश्वरज्ञानस्य अनिन्द्रियजन्यस्य साक्षात्त्वानापत्तेश्च इत्युक्ता अव्याप्तिश्च ईश्वरप्रत्यक्षं न लक्ष्यमिति समाहिता। अथवा ज्ञानाकरणकं ज्ञानं प्रत्यक्षमिति लक्षणान्तरं स्वीकृतम्।

एतत्सर्वमालोच्यैव तत्रभवानन्नम्भट्ट वेदान्तब्रह्मसूत्रभाष्यसम्मत्यनुरोधेन मनसः इन्द्रियत्वं व्याचष्टे। तथाहि :- हस्तादयस्तु स्थितेऽतो नैवम् २-४-६ इति सूत्रवृत्तौ "दशमे पुरुषे प्राणाः आत्मैकादशः ते यदास्मात् शरीरात् मर्त्यात् उत्क्रामन्ति अथरोदयन्ति" बृ ३-९-४ इत्येकादशानां प्राणानां उत्क्रान्तिश्रवणात् सर्वशब्द एकादशप्राणपर एवेति उदाहृतवाक्ये आत्मा अन्तःकरणं करणाधिकारात्" इति वर्णितं तत्रभवता। एतच्च भाष्यसङ्गतम् - शब्दस्पर्शरूपरसगन्धविषयाः पञ्च च बुद्धिभेदाः तदर्थानि च पञ्च बुद्धीन्द्रियाणि। वचनादानविहरणोत्सर्गानन्दाः पञ्च कर्मभेदाः तदर्थानि च पञ्च कर्मेन्द्रियाणि। सर्वार्थविषयं त्रैकाल्यवृत्ति मनस्त्वेकमनेकवृत्तिकम् तदेव वृत्तिभेदात् क्वचित् भिन्नवत् व्यपदिश्यते मनोबुद्धिरहङ्कारः चित्तं चेति"। त इन्द्रियाणि तद्व्यपदेशादन्यत्र श्रेष्ठात् २-४-१७ इति सूत्रवृत्तौ च स्पष्टमुदीरितं पुनस्तत्रभवता अन्नम्भट्टेन "ननु उदाहृतश्रुतौ मनसोऽपि पृथक् निर्देशात् इन्द्रियात् तत्वान्तरं स्यात्" इति पूर्वपक्षमुद्भाव्य न स्यात् तत्र तु मनःष्षष्ठानीन्द्रियाणि इत्यादौ मनसः इन्द्रियत्वप्रसिद्धेः ब्राह्मणपरिव्राजकन्यायेन मनोग्रहणं नेयम् इति।

उक्तं च सिद्धान्तलेशसंग्रहे :-

इतरे ज्ञानमेवेयं मनसोऽपीन्द्रियत्वतः

बाह्यार्थेष्वेव वृत्तीनामावृत्त्यभिभवः फलम्।

इतरेतु अहमाकारापि वृत्तिः ज्ञानमेव। मामहं जानामि इत्यनुभवात् न च कारणासम्भवः। अनुभवानुसारेण मनस एवान्तरिन्द्रियस्य कारणत्वस्यापि कल्पनात् इत्याहुः इति प्राचां वचनमपि ग्राह्यम् इति।

एकादशप्राण इति श्रुत्युक्तेः ब्रह्मसूत्रकारैः भाष्यकारैश्च तदन्वाख्यानं तथैव विहितम्। तदनुसारेण मनः एकादशेन्द्रियमिति वदतः तत्रभवतः अन्नम्भट्टस्य च वृत्तिः समीचीना शालते।

(०)

# शब्दस्यापरोक्षज्ञानजनकत्वम्

समन्वयाधिकरणे वर्णकान्तरमुपक्षिप्य वेदान्तानां ज्ञानविधिपरत्वं निरस्तम्। तस्मिन् सन्दर्भे श्रोतव्य इति पदस्य विधित्वं परास्तम्। विचारविध्यसम्भवेऽपि संस्कारविधित्वं किं न स्यादिति पूर्वपक्षः अभ्यूहितः। अविद्याकृतमालिन्यनिवृत्तिः संस्कारः अविद्यानिवृत्तिरेव वा संस्कारः इति परिकल्प्य परोक्षज्ञानेन अविद्यानिवृत्तिरशक्या इति प्रतिपादितम्। अपरोक्षज्ञानं लोकसिद्धं विधिं नापेक्षते, परोक्षज्ञानं चाविद्यानिवृत्ताव-प्रयोजकमिति विधित्वं श्रोतव्यपदस्य तिरस्कृतम्। अस्मिन् प्रस्तावे, श्रवणमनननिदिध्यासनानां साधनानामविद्यानिवृत्तौ प्रयोजकत्वं भवति।

श्रोतव्य इति दर्शनमुद्दिश्य परोक्षज्ञानं विधीयते इति पक्षे विचार्य-माणे सति, "परोक्षं वा शब्दज्ञानमपरोक्षं वा, नाद्यः, दशमस्त्वमसीत्यादा-वपरोक्षे वस्तुनि शब्दस्यापरोक्षज्ञानजनकत्वेन, अपरोक्षे ब्रह्मणि शब्दस्य परोक्षज्ञानजनकत्वायोगात्" इति तत्रभवता समुपन्यस्तमन्नम्भट्टेन। ननु किं नाम तावदपरोक्षत्वमिति लक्षणं विमृष्टं तत्रभवतैव। तद्विमृष्ट-लक्षणविवरणानन्तरं चास्माकमाशयः आविष्करिष्यते।

यत्र इन्द्रियजन्यत्वं तत्रापरोक्षत्वमिति व्याप्तिः शाब्दबोधे, शब्द-ज्ञानजन्यत्वमस्ति इन्द्रियत्वेन इन्द्रियजन्यत्वं नास्तीति न भवति। किन्तु ईश्वरसमवेतप्रत्यक्षे अव्याप्तिः तदवस्था। लक्ष्यैकदेशे लक्षणस्यासत्वात्; "संख्यादयः पञ्चबुद्धिः इच्छायत्नोऽपि चेश्वरे" इति कारिकावल्यामुक्त-रीत्या ईश्वरे नित्यज्ञानेच्छायत्नानां सत्वात् तद्ज्ञानस्येन्द्रियत्वेन इन्द्रिय-जन्यत्वेन चाव्याप्तत्वात्। ब्रह्मणः ज्ञानमिन्द्रियजन्यं न भवति, ईश्वरज्ञानमपि नित्यत्वात् पूर्वोक्तलक्षणे, नान्तर्भवति। अतश्च इन्द्रियत्वेन इन्द्रियजन्यं ज्ञानं प्रत्यक्षम् इत्याकारकं लक्षणं परित्यज्य ज्ञानकरणकं ज्ञानं प्रत्यक्षमिति लक्षणं स्वीकृतम्। अनुमितौ व्याप्तिज्ञानस्योपमित्तौ सादृश्यज्ञानस्य

शाब्दबोधे शाब्दज्ञानस्य करणत्वम् । श्रवणेन्द्रियशब्दसन्निकर्षजन्यं ज्ञानं शाब्दबोधे करणं भवति । अत एवोच्यते तत्रभवता "अनुव्यवसायस्य चाक्षुषमात्रविषयत्वादि"ति । ज्ञानानन्तरं ज्ञानमनुव्यवसायः घटमहं जानामीत्याकारकः । अनुव्यवसायः स्पार्शनादिप्रत्यक्षे न भवति, उपनीतप्रत्यक्षे सुरभिचन्दनमित्यत्र लौकिकालौकिकसन्निकर्षजन्यज्ञाने सुरभिप्रत्यक्षस्य ज्ञानलक्षणाप्रत्यासत्तिरूपत्वात् न भवति । किं च "पर्वतं साक्षात्करोमि वह्निमनुमिनोमि" इत्याकारके अव्याप्यवृत्तिस्थले च पर्वतांश एव अनुव्यवसायः । अत्र अनुमितित्वप्रत्यक्षत्वयोः अव्याप्यवृत्तित्वं यथा पर्वतांशे अनुमितित्वाभावः वह्न्यंशे प्रत्यक्षत्वाभावः इत्युभयोः अव्याप्यवृत्तित्वम् अर्थात् स्वसमानाधिकरणाभावप्रतियोगित्वम् । अत्रापि प्रत्यक्षविषये पर्वत एवानुव्यवसायः । तस्मात् द्वितीयमप्यपहाय लक्षणं, तत्रभवानन्नम्भट्टः अपरोक्षवस्तुविषयकत्वेनैवापरोक्षत्वं ज्ञानस्येति लक्षणमादत्तवान् । "साक्षादपरोक्षं ब्रह्मेति" श्रुतिवाक्ये साक्षात्पदस्य चार्थः प्रमितिसाधनेन्द्रियान्तः करणद्वारेण विना इति परिभाषाव्याख्यायां विवृतम् । तस्मादत्यन्तमपरोक्षे ब्रह्मणि शब्दस्य परोक्षज्ञानजनकत्वं न संघटते शब्दादप्यपरोक्षमेव ज्ञानमुत्पद्यते इति हेतोः, श्रोतव्यपदेन शाब्दं परोक्षज्ञानं विधीयते इति पक्षो निराकृतः ।

अथ शब्दस्यापरोक्षज्ञानजनकत्वं निराकुर्वता अन्नम्भट्टेन तत्रभवता "तस्यैव तं प्रति विधानायोगात्" इत्युक्तम् । अपूर्वबोध्यत्वं विधेयत्वमनुवाद्यत्वमुद्देश्यत्वमिति नियमात् उद्देश्यविधेययोरभिन्नता न युक्तिसहेति तत्रभवत आशयः । परोक्षविधेः अपरोक्षविधेश्चानुपपन्नत्वात् विधिमन्तरेणापि सिद्धब्रह्मज्ञानेनानर्थनिवृत्तेः पुरुषार्थस्य प्रतिपादनात् शास्त्रत्वं सम्भवतीति श्रोतव्यपदस्य विधित्वं निरस्तम् ।

अत्रास्माकमयमाशयः । परोक्षं वा शाब्दज्ञानमपरोक्षं वेति शङ्कायां परोक्षमेवेत्यङ्गीकृत्य ब्रूमः । दशमस्त्वमसीत्यादौ शब्दस्य अपरोक्षज्ञानजनकत्वमस्ति । तथापि श्रोत्रद्वारा शब्दार्थग्रहणमात्रेण, श्रवणमनननिदिध्यासनानि विना साक्षादपरोक्षज्ञानं ब्रह्मणो न सम्भाव्यते । तस्मात्

यत् श्रूयते तत्त्वमस्यादिवाक्यजातं तत्तु परोक्षमेव ज्ञानं जनयति मुमुक्षोः, दृष्टानुसारित्वात् कल्पनायाः। अपरोक्षे ब्रह्मणि शब्दस्य परोक्षज्ञान-जनकत्वायोगात् इति यदुच्यते तन्न युज्यते। अविद्यावशगस्य मुमुक्षोः सहस्रकृत्वः श्रवणाद्यभ्यासेऽपि अहंब्रह्माकाराकारिता चित्तवृत्तिः कथञ्चि-देवोदेति। सा च चित्तवृत्तिः अपरोक्षज्ञानमिति नोच्यते यतस्सापि मनो-वृत्तिरेव। तस्मादविद्यावशगानां जिज्ञासूनां कृते परोक्षज्ञानमुद्दिश्य श्रवणादिकं विधीयते इत्युक्तौ न कापि क्षतिः। अपरोक्षे ब्रह्मणि शब्दस्य परोक्षज्ञानजनकत्वभीत्या अपरोक्षज्ञानाय समुपक्रान्तः वेदान्तवाक्यविचारः विदुषां व्याख्यातृणां परोक्षमेव ज्ञानं जनयेत्। अविद्यादशायां ब्रह्म अपरोक्ष पदेन व्यवहृतमपि परोक्षमेव भवति। शब्दः साधकस्य मुमुक्षोः परोक्षमेव ज्ञानं जनयति। दशमस्त्वमसीत्युदाहरणं न भवति किन्तु प्रत्युदाहरणमेव। दशमस्त्वमसीतिवत् तत्त्वमसीत्युच्चारणमात्रेणापरोक्षानु भूतेरसिद्धत्वात्। अत एव दशमस्त्वमसीति ज्ञानाय श्रवणमनननिदिध्यास नानि नापेक्ष्यन्ते। अथ यस्य कस्यचिन्महात्मनः अपरोक्षानुभवोऽस्ति तस्य न काप्यावश्यकता वेदान्तब्रह्मसूत्रभाष्यव्याख्यापरम्परास्पर्शेनापीति दृष्टानुसारिकल्पना वरीयसी।

अथापरोक्षज्ञानजनकत्वमपि शब्दस्य युज्यते इति प्रतिपादयामः। वाक्यान्वयात् १-४-१९ इति सूत्रादारभ्य "आत्मा वा अरे द्रष्टव्यः" इत्यादिवेदवाक्यमेव विचार्यते। तत्र भाष्यकारैः "अस्यैव परमात्मनः अनेनापि विज्ञानात्मभावेन अवस्थानात् उपपन्नमिदमभेदाभिधानमिति काशकृत्स्न आचार्यो मन्यते। ..... दर्शितं तु पुरस्तात् काशकृत्स्नीयस्य पक्षस्य श्रुतिमत्त्वम्" इत्युपपादितम्। तस्मादत्र वाक्ये आत्मा उद्देश्यः विधेयं च ब्रह्म। द्वयोः अभेदस्य स्वतस्सिद्धत्वेऽपि अविद्यावशेन विस्मृत-त्वात् बोध्यते, यथा दशमस्त्वमसीत्यत्र युष्मच्छब्दार्थस्य दशमशब्दार्थस्य च भेदाभावः। आत्मा तावत् परमप्रेमस्वरूपत्वेनाभिमतः द्रष्टव्यः अनुवाद्य एव यमुद्दिश्य अयमात्मा ब्रह्मेति ब्रह्मात्मैक्यावगमनं विधीयते, यत् पूर्व-सिद्धमपि अपूर्वबोध्यमेव दशमत्वमिव। न केवलं परोक्षं ब्रह्मज्ञानमिष्यते

न वा आत्मज्ञानेन सन्तुष्टिः किन्तु ब्रह्मात्मैक्यावगतये यतमानो जिज्ञासुर्भवति। तं प्रति वोधयति श्रुतिः "अयमात्मा ब्रह्म सर्वानुभूः" इति। अत एव श्रवणपदार्थस्य विचारस्य ब्रह्मात्मैक्यानुकूलन्यायविचारः इत्युपपादितं विस्तरेण श्रवणविधावस्माभिः।

यं प्रति सकृदुच्चरितं तत्त्वमसीति वेदवाक्यं सम्यग्दर्शनमर्थादपरोक्षानुभवं जनयतिः, तत्र शब्दस्यापरोक्षज्ञानजनकत्वं को नाम निवारयितुमीष्टे? तच्चापरोक्षज्ञानं जेगीयते यत्र पुनः परोक्षं न किमपि स्यात्, भेदाभेदौ सपदि गलितौ पुण्यपापे च विशीर्णे स्याताम्। दशमस्त्वमसीति अपरोक्षज्ञाने सिद्धेऽपि महामूर्खस्य पुनरेकदा आत्मनि दशमत्व वुद्धिः नश्येत्। दशमस्त्वमसि तत्त्वमसि इति वाक्ययोः तुलना नैत्र कार्या यतः तत्त्वमसीति श्रवणेनात्मसाक्षात्कारवतस्तु न पुनः परोक्षं किमपि शिष्यते। तथा च अविद्यावशगजीवापेक्षया शब्दस्य परोक्षज्ञानजनकत्वं मुक्तापेक्षया च अपरोक्षज्ञानजनकत्वमित्युभयं सम्भवति।

उत्क्रमिष्यत एवंभावादित्यौडुलोमिः १-४-२१ इनि सूत्रेण च "मुक्तिसमये परमात्मना एकीभावात् भविष्यदभेदमादाय जीवोपक्रम" इति ओडुलोम्याचार्यस्य मतमभिव्यक्तम्। एतदनुसारेण अविद्यादशायामपि भाविसंज्ञाव्यपदेशं गृहीत्वा शब्दस्य अपरोक्षज्ञानविधित्वं निरभ्यन्तरमङ्गीकुर्मः।

अस्माकं चायमाशयः न भाष्यविरोधी। तथाहि– हरिदीक्षितवृत्तौ भाष्यमनूद्य लिङ्गाच्च ४-१-२ इति सूत्रं यथाव्याख्यातं तथा प्रदर्शयामः :- "अत्रायं भाष्यसंग्रहः। भवतु नाम साध्यफलेषु प्रत्ययेष्वावृत्तिः। तेष्वावृत्तिसाध्यस्यातिशयस्य सम्भवात्। यस्तु परब्रह्मविषयः प्रत्ययः नित्यशुद्धबुद्धमुक्तस्वभावमात्मभूतमेकमेव परब्रह्म समर्पयति तत्र किमर्था आवृत्तिः? ननु सकृत् श्रवणे ब्रह्मात्मत्वप्रतीतेः अनुपपत्तेः आवृत्त्यभ्युपगम इति चेन्न। आवृत्तावपि तदनुपपत्तेः। यदि हि तत्त्वमसि इत्येवंजातीयकं वाक्यं सकृत्श्रूयमाणं ब्रह्मात्मत्वप्रतीतिं नोत्पादयेत् तदेवावर्त्यमानमुत्पादयिष्यतीति का प्रत्याशेति? अत्रोच्यते—भवेदावृत्त्यानर्थक्यं तं प्रति यस्तत्त्वमसीति

सकृदुक्तमेव ब्रह्मात्मत्वमनुभवितुं शक्नुयात् । यस्तु न शक्नोति तं प्रत्युपयुज्यत एवावृत्तिः । अत एव छान्दोग्ये श्वेतकेतुं प्रति नवकृत्व उपदेशः कृतः । तस्मादावृत्तिः कर्तव्या । विस्तरस्तु भाष्ये द्रष्टव्यः" इति । एतदनुसारेण यं प्रति सकृत्श्रवणमेव ब्रह्मात्मत्वमनुभावयति तत्र शब्दस्य अपरोक्षज्ञानजनकत्वम् । यस्य कृते पुनः आवृत्तिरावश्यिका तस्य तु परोक्षमेव ज्ञानं जनयति शब्दः इति स्पष्टम् । "नैव दृष्टेऽनुपपन्नं नामेति" स्वयमभिदधता तत्रभवता अन्नम्भट्टेनेदमङ्गीकर्तव्यं भवति । तथा च साधनदशायां शब्दस्य परोक्षज्ञानजनकत्वमङ्गीकृत्य ओदनं पचतीत्यादिवत् भाविसंज्ञाव्यपदेशेन अपरोक्षज्ञानजनकत्ववचने न दोष इत्यस्माकमाशयः।

सर्वं खल्विदं ब्रह्म इति वाक्यानुसारेण परोक्षमपि ब्रह्म अपरोक्षमपि ब्रह्मैव । अतः अपरोक्षे ब्रह्मणि शब्दस्य परोक्षज्ञानजनकत्वभीतिः मा भूत् ।

तत्र भवानन्नम्भट्टः जिज्ञासासूत्रवृत्तिं रचयन् "समन्वयसूत्रे भगवत्पादैः श्रोतव्य इत्यत्रात्मज्ञानविधिर्निराकृतः न तु ज्ञानोद्देशेन विचारविधिरिति न तद्विरोधोऽपि" इत्युक्तवान् । ततः परं विवरणमतं भामतीकारानुयायिमतं चानूद्य "अस्तु वा श्रवणविधिः तथापि न लक्षणाध्याहारौ इति तत्रभवान् स्वमतमवोचत् । पुनश्च समन्वयसूत्रवृत्तौ आत्मज्ञानविधिनिरासाय श्रवणस्य विधित्वं समूलमकृन्तदिति तत्रभवतो वृत्तिं परिशीलयतां मनोमुकुरे विरोधः प्रतिभासते । किं च आवृत्तिरसकृदुपदेशात् ४-१-१ इति सूत्रव्याख्यायां तत्रभवता अन्नम्भट्टेन "आत्मसाक्षात्कारफलतया दृष्टार्थेन अवघातवत् तण्डुलनिर्वृत्तिपर्यन्तं फलपर्यन्तावृत्ते. न्यायसिद्धत्वाच्च" इति वर्णितम् । "अवघातवत्" इति उपमानप्रदर्शनेन श्रवणस्य नियमविधित्वं कटाक्षितं चतुर्थाध्याये । तस्य पूर्वोक्तविधिनिरासस्य च विपर्यासः स्फुटः । श्रवणादीनां दृष्टार्थत्वं च स्पष्टमस्मिन्नेव सन्दर्भे तत्र भवतैवोल्लिखितम् । तर्हि ज्ञानविधिनिरासप्रस्तावे समन्वयसूत्रस्य वर्णकान्तरे "श्रोतव्य इत्यनेन विधीयते तच्चापूर्वद्वारा मनननिदिध्यासनयोरपि अविद्यानिवृत्तौ अपूर्वद्वारा" इति यद-

भिहितं तत्रभवता तदपि नात्यन्तरमणीयम् अपूर्वानयनप्रस्तावात्। तथा च प्राचीनमतानुवादमुखेन ब्रह्मसूत्रमनन कृतोद्यमेन तत्रभवता अन्नम्भट्टेन श्रवणविधेरिव शब्दस्यापरोक्षज्ञानजनकत्वस्यापि परिष्कारः न कृतः इति नः प्रतिभाति। अद्वैतमोक्षद्वयप्रतिपादकशास्त्रद्वयबलात् अधिकारिभेदाच शब्दस्य द्वयी गतिः सम्भाव्यते। श्रोतव्य पदविधित्वापहानं च न शक्यम्। तमेवैकं जानथ आत्मानमन्या वाचो विमुञ्चथ, तद्विजिज्ञासस्व, सोऽन्वेष्टव्यः स विजिज्ञासितव्यः, तमेव धीरो विज्ञाय प्रज्ञां कुर्वीत—इत्यादिकाः श्रुतयः तमेवार्थं द्रढयन्ति। तस्मात् समेषां वेदवचसां विधित्वनिरासापेक्षया श्रुतिमतस्तर्क एवानुसन्धेयः। शास्त्रयोनित्वाधिकरणे" तर्कस्तु अनुग्राहकतया अङ्गीक्रियते" इति तत्रभवतैवोल्लेखितम्। तदनुरोधेनास्माभिश्च। श्रोतव्यपदस्य विधित्वं न निरस्यते"। समन्वयसूत्रभाष्ये चात्मज्ञानविधिर्निराकृतः न तु ज्ञानोद्देशेन विचारविधिरिति" मिताक्षरापंक्तेः विवरणमन्यत्रास्माभिः कृतमिति नात्र वितन्यते। श्रवणस्य च नियमविधित्वं यथा सेत्स्यति तच्चान्यस्मिन् प्रकरणे वयमवोचाम। वेदान्तवाक्यस्य च तत्त्वमस्यादेः महिमा संक्षेपशारीरके सुचारुरूपेण वर्णितः इति तत्स्मरणपूर्वकं प्रसङ्ग एष विस्तरभयाद्विरम्यते :—

शक्नोति सिद्धमवबोधयितुं च वाक्यम्<br>
शक्नोति कार्यरहितं वदितुं च वाक्यम्।<br>
शक्नोत्यखण्डमवबोधयितुं च वाक्यम्<br>
शक्नोति मुक्तिफलमर्पयितुं च वाक्यम्॥

(०)

# जीवः जीवन्मुक्तिश्च

"सेयं देवतैक्षत हन्ताहमिमास्तिस्रो देवता अनेन जीवेनात्मनानुप्रविश्य नामरूपे व्याकरवाणि" छा ६-३-२ इति श्रुतौ जीवशब्दः लक्ष्यते। नामरूपव्याकर्तुः परमेश्वरस्य परब्रह्मणः जीवात्मतः अभिन्नत्वं चात्र स्फुटम्। जीवात्मा चायं शारीरकः व्यपदिश्यते "अनुपपत्तेस्तु न शारीरः १-२-३ शारीरश्चोभयेऽपि हि भेदेनैनमधीयते" १-२-२० इति सूत्रद्वये शारीरसंज्ञया जीव एवोक्तः। शारीरः शरीरे भवः इत्यर्थः। नन्वीश्वरोऽपि शरीरे भवति। सत्यं शरीरे भवति न तु शरीरे एव भवति। 'ज्यायान् पृथिव्या ज्यायानन्तरिक्षात्' 'आकाशवत् सर्वगतश्च नित्यः' इति च व्यापित्वश्रवणात्। जीवस्तु शरीर एव भवति। तस्य भोगाधिष्ठानात् शरीरादन्यत्र वृत्त्यभावात्" इति श्रीशङ्करभाष्ये च प्रोक्तम्।

अयं जीवः किंस्वरूपः इति प्रस्तूय विचार्यते। 'एषोऽणुरात्मा चेतसा वेदितव्यः" मु ३-१-९ इति तथा "बालग्रशतभागस्य शतधा कल्पितस्य च, भागो जीवस्स विज्ञेयः" श्वे ५-९ इति च श्रुत्युक्तेः, जीवस्य परमाणुपरिमाणं सिद्धम्। तथाप्येतत् पूर्वपक्षीकृतं द्वितीयाध्याये तृतीयपादे उत्क्रान्त्यधिकरणेन। "तद्गुणसारत्वात्तु तद्व्यपदेशः प्राज्ञवत् २-३-२९ इति सूत्रवृत्तौ तत्रभवता अन्नम्भट्टेन बुद्धिगताणुत्वोत्क्रान्त्यादिभिः जीवस्य तद्व्यपदेशो न वस्तुतः इत्यर्थ." इति व्याख्यातम्। जीवस्य लोकान्तरगमनेऽपि बुद्धिसम्बन्धं द्योतयति "यावदात्मभावित्वाच्च न दोषस्तद्दर्शनात्" २-३-३० इति सूत्रम्। बुद्ध्यध्यासादणुर्जीव उक्तः स्वतः विभुरेव।

2. बुद्ध्यध्यस्तं चैतन्यं जीवः तत्साक्षिभूतं चैतन्यं परमात्मा इति तयोः अविद्याप्रयुक्तं भेदमालम्ब्य "ऋतं पिबन्तौ सुकृतस्य लोके गुहां प्रविष्टौ परमे परार्धे। छायातपौ ब्रह्मविदो वदन्ति पञ्चाग्नयो ये च त्रिणाचि-

क्रेताः" इत्युक्तं काठकोपनिषदि । तदनुसारेण सूत्रमुक्तं बादरायणेन "गुहां प्रविष्टावात्मानौ हि तद्दर्शनात् इति १-२-११ । एतादृक्स्थलेषु जीवात्मपरमात्मनोः भेदः अस्तीव प्रतीयते किन्तु न तावता भ्रमितव्यं भेदो वास्तविकः इति । स तु व्यावहारिकः । पारमार्थिकसत्यं त्वेकमेव। देहात्मप्रत्ययो यावत् वर्तते तावत् लौकिकव्यवहारः भेदमालम्ब्य वर्तिष्यते। तदुक्तम् :— देहात्मप्रत्ययो यावत् प्रमाणत्वेन कल्पितः । लौकिकं तद्वदेवेदं प्रमाणं त्वात्मनिश्चयात्" इति । उपपादितश्च वास्तविकः अभेदः जीवात्मपरमात्मनोः ब्रह्मसूत्रेषु । वेदान्तेषु तत्त्वमसीति बहुकृत्वः अभ्यासात् अद्वैतसिद्धान्त एव श्रुतिमूलकः बादरायणेन ब्रह्मसूत्रैः प्रतिपिपादयिषितः इत्यत्र नास्ति संशीतिलेशोऽपि । तथाहि— "मायामात्रं तु कार्त्स्न्येन अनभिव्यक्तस्वरूपत्वात् ३-२-३, उपसंहारदर्शनात् नेति चेन्न क्षीरवद्धि २-१-२४ देवादिवदपि लोके २-१-२५, श्रुतेस्तु शब्दमूलत्वात् २-१-२७, आत्मनि चैवं विचित्राश्च हि २-१-२८, आभास एव च २-३-५०, अत एव चोपमा सूर्यकादिवत् ३-२-१८ इत्यादिभिस्सूत्रैः बादरायणः स्वमतमद्वैतं विस्पष्टमूचिवान् ।

जीवानां नानात्वव्यवहारः उपाधिकृतः इत्यवगन्तव्यम् । उक्तं च श्रीमद्भागवते भीष्मस्तवे ।

तमिममहमजं शरीरभाजां हृदि हृदि धिष्ठितमात्मकल्पितानाम् ।
प्रतिदृशमिव नैकधार्कमेकम् समधिगतोऽस्मि विधूतभेदमोहः इति ।

एक एवात्मा प्रत्येकं हृदि धिष्ठितः सन् बहुधा प्रतीयते । प्रतिबिम्बानां बहुत्वेऽपि बिम्बादपृथक्भाव एव । उपाधिसम्बन्धादेव बहुत्वमुत्पत्तिरपि श्रूयते । सर्वे एते आत्मनो व्युच्चरन्ति बृ २-१-२० इति श्रुत्या उपाधिवशात् जीवानामुत्पत्तिरभिहिता । नात्मा श्रुतेः नित्यत्वाच्च ताभ्यः २-३-१७ इति सूत्रेण जीवोत्पत्तिः भाक्ता उपाधिसम्बन्धकृतेति बादरायणो निर्णयति । नित्यत्वादेव "न जीवो म्रियते" छा ६-११-३

इति श्रुत्या ज्ञाप्यते । तस्मादुत्क्रान्तिगत्यागतयः तद्गुणसारत्वात् व्यपदिष्टा न तु जीवस्य वास्तविका इत्यर्थः ।

उपाधिसम्बन्धग्रहणेन सर्वा हानिरुपगता जीवस्य। तथाहि–"कर्ता शास्त्रार्थवत्वात्" २-३-३३ इति सूत्रेण जीवस्य कर्तृत्वं प्राप्तं तक्ष-दृष्टान्तेन तावदौपाधिकमेवेति समाहितम्। अविद्याप्रत्युपस्थापितद्वैत-सम्पृक्तः आत्मा कर्ता दुःखी भवति। मुक्तावस्थायां विद्याबलेन केवलो निर्वृतः सुखील भवति । अत एव जीवः सम्प्रसादशब्देनोक्तः सम्यक्प्रसीदति उपाध्युपशान्ताविति । वैयासिकन्यायमालात्र प्रमाणम् ।

उपाध्युपशान्तिश्च कीदृशी इति ज्ञानात् पूर्वं, उपाधिः प्रथमं ज्ञातव्यः। उक्तं पञ्चदश्याम् :–

चैतन्यं यदधिष्ठानं
लिङ्गदेहश्च तादृशः ।
चिच्छाया लिङ्गदेहस्था
तत्संघो जीव उच्यते ।। इति

पञ्चप्राणमनोबुद्धिदशेन्द्रियसमन्वितम् ।
अपञ्चीकृतभूतोत्थं सूक्ष्माङ्गं भोगसाधनम् ।।

इत्युक्तलक्षणं च सूक्ष्मशरीरं जीव इत्युच्यते। विविच्य ज्ञायमाने वस्तुतस्तु शरीरं कदापि न जीवो भवति कोशादन्येनैव जीवेन भाव्यम्। कोशो उपाधिरित्यनर्थान्तरम् । जातिभिन्नो धर्मं उपाधिरिति नैयायिकलक्षणम् । प्राणप्रदत्वमुपाधिरिति काव्यप्रकाशोक्तं लक्षणम् उपाधिश्च द्विविधः वस्तुधर्मो वक्तृयदृच्छासन्निवेशितश्च । वस्तुधर्मोऽपि द्विविधः सिद्धः साध्यश्च । सिद्धोऽपि द्विविधः पदार्थस्य प्राणप्रदः विशेषाधानहेतुश्च। तत्राद्यो जातिः उक्तं हि वाक्यपदीये "न हि गौः स्वरूपेण गौः नाप्यगौः गोत्वाभिसम्बन्धात्तु गौरिति इति काव्यप्रकाशात्। यथा लूताशरीरमुपाधिर्भवति जीवसहितम्। लूतायां जीवः तन्तुप्रसारस्य निमित्तकारणं भवति। लूताशरीरं तु भवति उपादानकारणम्। शरीरं विना जीवः तन्तुवयनं कर्तुं न समर्थः।

जीवं विना शरीरमपि तन्तुं नोत्पादयति । अतः अभिन्ननिमित्तोपादानकारणस्य भवतीदमुदाहरणम् । जीवरहितं लूताशरीरं न भवत्युपाधिः प्राणप्रदत्वाभावात् । शरीरं विना जीवोऽपि नोपाधिः तस्यानवस्थानात् । ततश्चोपाध्यवच्छिन्नचैतन्यं जीव इति राद्धान्तः । जीवश्चायमुपाधौ अहन्ताममते वहति, अयमेव च दोषो भवति संसारबहुलक्लेशोपभोगहेतुः। उक्तं हि गीतायाम् ।

प्रकृतेः क्रियमाणानि गुणै. कर्माणि सर्वशः ।
अहङ्कारविमूढात्मा कर्ताहमिति मन्यते" ।। इति प्रकृतिश्चद्विविधा

भूमिरापोऽनलो वायुः खं मनो बुद्धिरेव च ।
अहङ्कार इतीयं मे भिन्ना प्रकृतिरष्टधा" ।।

इत्युक्ता अपरा प्रकृतिः । जीवस्तु पराप्रकृतिः ।

"अपरेयमितस्त्वन्यां विद्धि पार्थ सनातनीम् ।
जीवभूतां महाबाहो ययेदं धार्यते जगत् ।।

अजोऽपिसन्नव्ययात्मा भूतानामीश्वरोऽपि सन् ।
प्रकृतिं स्वामवष्टभ्य सम्भवाम्यात्ममायया"

इत्युक्ता मायैव मूलप्रकृतिः चिच्छक्तिः यतः संसारस्य सृष्टिप्रलयौ सम्भवतः । जीवास्तु बहूपाधिभिन्नाः पाञ्चभौतिकशरीरमेव आत्मतया मन्यमानाः भावविकारजात दुःखपरम्परामधिगच्छन्ति । एतदुद्धाराय च सम्यग्दर्शनमेव शरणमित्युक्तं वेदान्तदर्शने । "तरति शोकमात्मविद्" इत्युक्तं खलूपनिषत्सु । जानमार्गमवलम्ब्य देवयानेन गच्छतः जीवस्य अनावृत्तिरभिहिता ।" तयोर्ध्वमायन्नमृतत्वमेति" छा ७ ७-६ इति श्रुतिस्तत्र प्रमाणम् । इतरस्य तु कर्ममार्गमाश्रित्य पितृयानेन गच्छतः आवृत्तिरभिहिता । आकाशाच्चन्द्रमसमेष सोमो राजा छा ५-१०-३-४ इति श्रुतिस्तत्र मानम्। अश्रुतत्वादितिचेन्नेष्टाधिकारिणां प्रतीतेः ३-१-६ इति सूत्रेणोक्तं पितृयानम् । ये पुनः न विद्यया देवयाने, न

कर्मणा पितृयाने अधिकृताः, ते क्षुद्रजन्तुभावलक्षणं मार्गमधिगच्छन्ति। उक्तमेतत् विद्याकर्मणोरिति, तु प्रकृतत्वात् ३-१-१८ इति सूत्रेण।

ये पुनरुपासनया संक्षालितचित्तमालिन्याः ज्ञानिनो भवन्ति ते मुक्तिं लभन्ते। उपासना च द्विप्रकारा आत्मज्ञानाय क्रियमाणा। सगुणब्रह्मोपासना निर्गुणब्रह्मोपासना चेति। सगुणोपासनया अर्चिरादि-मार्गमाश्रयन्तः कार्यब्रह्मलोकमृच्छन्ति। महाप्रलये च "कार्यब्रह्मप्रलये सति तत्रैवोत्पन्नतत्त्वज्ञानास्सन्तः तदध्यक्षेण ब्रह्मणा सह सगुणात् परं विशुद्धं ब्रह्म प्रतिपद्यन्ते इत्येषा क्रममुक्तिरभिहिता। "कार्यात्यये तद-ध्यक्षेण सहातः परमभिधानात् ४-३-१० इति सूत्रेण चायमेव विषयः प्रतिपादितः। ये पुनः निर्गुणं ब्रह्म ध्यायन्ति ते मरणानन्तरं विदेह-कैवल्यमधिगच्छन्ति। अत्र मरणानन्तरमिति शरीरत्यागानन्तरमित्यर्थः, वस्तुतः उत्क्रान्त्यभावात्। "स उच्छ्वयत्याध्मायति आध्मातो मृतश्शेते" बृ. ३-२-११ इति श्रुत्युक्तः उत्क्रान्तिप्रतिषेधः "स्पष्टो ह्येकेषाम्" ४-२-१३ "स्मर्यते च" इति सूत्राभ्यामनूदितः। अनारब्धकार्ये एव तु तदवधेः" ४-१-१५ इति सूत्रेण च यावत्पर्यन्तं न शरीरपातः तावत्पर्यन्तं विदुषो मुक्तौ विलम्बः तदनन्तरं च ब्रह्म सम्पद्यते इत्युक्तम्। इदमेव च सूत्रं जीवन्मुक्तिविदेहकैवल्ययोः भेदं व्याचष्टे। "अप्रवृत्तफले एव पूर्वे जन्मान्तरसञ्चिते अस्मिन्नपि च जन्मनि प्राक् ज्ञानोत्पत्तेः सञ्चिते सुकृत-दुष्कृते ज्ञानाधिगमात् क्षीयेते। नत्वारब्धकार्ये समिभुक्तफले याभ्या-मेतत् ब्रह्मज्ञानायतनं जन्म निर्मितम्" इति भाष्यम्। भाष्यं च यथातथं संगृहीतं तत्रभवता मिताक्षरायाम् सूत्रेऽस्मिन्।

अथ शरीरत्यागात्परं विदेहकैवल्यस्य निगमनं लयचतुष्टयवर्णनेन यथा कृतं वेदान्तप्रकरणग्रन्थेषु तत् पश्यामः :– सगुणोपासकानां चतुर्मुखेण सह विदेहकैवल्यं प्राकृतप्रलये सम्भवति। तुरीयप्रलयस्तु आत्यन्तिकः ब्रह्मसाक्षात्कारनिमित्तकः ज्ञानोदये सति सम्भवति विदेहमुक्तिरिति यं

कथयन्ति पुराविदः। नित्यनैमित्तिक प्रलयौ तु समेषां जीवानामज्ञानपतितानामिति विवेकः। "नित्यः प्रलयः सुषुप्तिः तस्याः सकलकार्यप्रलयरूपत्वात्, कार्यब्रह्मणो दिवसावसाननिमित्तकः त्रैलोक्यमात्रप्रलयः।

एषनैमित्तिकः प्रोक्तः
प्रलयो यत्र विश्वसृक्।
शेतेऽनन्तासने नित्य
मात्मसात्कृत्य चाखिलम्॥ इति

वचनं नैमित्तिकप्रलये मानम्। तत्राद्याः त्रयोऽपि लयाः कर्मोपरतिनिमित्ताः तुरीयस्तु ज्ञानोदयनिमित्तः लयो ज्ञानेनैव सहेति विशेष" इति वेदान्तपरिभाषायामुक्तम्। अर्थात् नित्यनैमित्तकलयौ जीवसाधारणौ क्रममुक्तिमतां तु प्राकृतप्रलयः विदेहमुक्तिभाजामात्यन्तिकः तुरीयः इति ज्ञायते।

तर्हि जीवतः अर्थात् शरीरं धारयतः ब्रह्मविदः का गतिः इति प्रश्ने ब्रह्मज्ञानात मूलाज्ञाननिवृत्तौ, तत्कार्यप्रारब्धकर्मणोऽपि निवृत्तिः, तस्मात् ज्ञानिनो देहधारणं नोपपद्यते इत्याक्षेपे च प्राप्ते, "न, अप्रतिबद्धज्ञानस्यैव अज्ञाननिवर्तकतया प्रारब्धकर्मरूपप्रतिबन्धकदशायामज्ञाननिवृतेरनङ्गीकारात्" इत्यादिना वेदान्तपरिभाषायां जीवन्मुक्तस्यापि अज्ञानलेशः अङ्गीकृतः।

"ऐहिकमप्यप्रस्तुतप्रतिबन्धे तद्दर्शनात्" ३-४-५१ इति सूत्रेण प्रतिबन्धाभावे इहैव जन्मनि ज्ञानमुत्पद्यते इत्युक्तम्। तदनन्तरपादेन च चतुर्थाध्यायारम्भे जीवन्मुक्तिदशाचिन्तनं कृतम्। "क्षीयन्ते चास्यकर्माणि तस्मिन् दृष्टे परावरे" इत्यादिश्रुतिवाक्येषु सत्स्वपि जीवतो न मोक्षप्राप्तिरिति सिद्धान्तितम् प्रारब्धक्षयाभावात्। तदेतन्निदर्शितमस्माभिः भाष्यवाक्यसंग्रहप्रदर्शनेन लयचतुष्टयर्णनात् पूर्वम्।

एवं स्थितौ, विदेहकैवल्यापेक्षया जीवन्मुक्तेः क्वचित् वेदान्तग्रन्थेषु अवरत्वं वर्णितम्। तथाहि :—

मानसोल्लासे जीवन्मुक्तस्य लक्षणमुक्तम् :-

"योगाभ्यासवशाद्येन मनो निर्विषयं कृतम् ।

विवृत्तस्स पुमान् सद्यः जीवन्मुक्तो भविष्यति " इति पञ्चदश्यां तृप्तिदीपे पुनरुक्तम् :-

रज्जुज्ञानेऽपि कम्पादिः शनैरेवोपशाम्यति ।
पुनर्मंदान्धकारे सा रज्जुः क्षिप्तोरगीभवेत् ।।

एवमारब्धभोगोऽपि शनैः शाम्यति नो हठात् ।
भोगकाले कदाचित्तु मर्त्योऽहमिति भासते ।।

दशमोऽपि शिरस्ताडं रुदन् बुद्ध्वा न रोदिति ।
शिरोव्रणस्तु मासेन शनैः शाम्यति नो तदा ।।

शमयत्यौषधेनायं दशमः स्वं व्रणं यथा ।
भोगेन शमयित्वैतत् प्रारब्धं मुच्यते तथा ।
तदभ्यासेन विद्यायां सुस्थितायामयं पुमान् ।

जीवन्नेव भवेन्मुक्तः वपुरस्तु यथा तथा" ।। इति । संक्षेपशारीरके च :-

"जीवन्मुक्तिः तावदस्ति प्रतीतेः ।
द्वैतच्छाया तत्र चास्त्रि प्रतीतेः ।
द्वैतच्छाया चास्ति लेशप्रतीतेः
तस्मिन्नर्थे स्वानुभूतिः प्रमाणम् ।।

ब्रह्मात्मत्वं सान्तरीयं पुरस्तात्
बोधोत्पत्तौ ध्वस्तमोहान्तरायम् ।
यद्यप्येवं द्वैतलेशानुवृत्तेः
प्रत्यक्षत्वात् मोहलेशोभ्युपेयः ।।

तस्माज्जीवन्मुक्तरूपेण विद्वान्
आरब्धानां कर्मणां भोगसिद्ध्यै ।

स्थित्वा भोगं ध्वान्तगन्धप्रसूतम्
भुक्त्वात्यन्तं याति कैवल्यमन्ते ॥" इति । सिद्धान्तलेश-संग्रहे चोक्तम् :-

ज्ञानेनावरणे नष्टे विक्षेपांशोऽनुवर्तते ।
प्रारब्धप्रतिबन्धेन स लेशस्तेन जीवनम् ॥

विरोधिन्युदिते शेषासम्भवादर्थवादताम् ।
सर्वज्ञात्मगुरुः प्राह जीवन्मुक्तिश्रुतेः स्फुटम् ॥

सर्वज्ञात्मगुरवस्तु विरोधिसाक्षात्कारोदये लेशतोऽपि अविद्यानुवृत्त्यसम्भवात् जीवन्मुक्तिशास्त्रं श्रवणादिविध्यर्थवादमात्रम् । शास्त्रस्य जीवन्मुक्ति-प्रतिपादने प्रयोजनाभावात् । अतः कृतनिदिध्यासनस्य ब्रह्मसाक्षात्कारोदय-मात्रेण सविलासवासनाविद्यानिवृत्तिरित्यपि कञ्चित् पक्षमाहुः " ।

"उत्पन्नात्मावबोधस्य ह्यद्वेष्टृत्वादयो गुणाः ।
अयत्नतो भवन्त्यस्य न तु साधन रूपिणः ॥"

इति नैष्कर्म्यसिद्धावुक्तमिति वेदान्तसारे प्रोक्तम् । एतेन स्थिरीक्रियते यत् गीताप्रोक्तस्थितप्रज्ञलक्षणानि जीवन्मुक्ते सहजसमन्वयं व्रजन्तीति । तादृग्जीवन्मुक्तस्य च वर्णनं कृतं वेदान्तसारे :- जीवन्मुक्तोनाम स्वस्व-रूपाखण्डब्रह्मज्ञानेन तदज्ञानबाधनद्वारा स्वस्वरूपाखण्डब्रह्मणि साक्षात्कृते अज्ञानतत्कार्यसञ्चितकर्म संशयविपर्ययादीनामपि बाधितत्वात् अखिलबन्ध-रहितो ब्रह्मनिष्ठः" इति । एतेन प्रतीयते जीवन्मुक्तस्य विदेहकैवल्य-वतश्च समकक्षत्वम् । उक्तञ्चोपदेशसाहस्र्याम् :-

"सुषुप्तवत् जाग्रति यो न पश्यति
द्वयं च पश्यन्नपि चाद्वयत्वतः ।
तथा च कुर्वन्नपि निष्क्रियश्च यः
स आत्मविन्नान्य इतीह निश्चयः " इति ।

भाष्यकृद्भिः श्रीशङ्करभगवत्पूज्यपादैस्तु विवेकचूडामणौ विदेहकैवल्या-पेक्षया जीवन्मुक्तेः लघुत्वं निरस्तम् समानप्रतिपत्तिश्च स्थिरीकृता तथाहि

क्रियानाशे भवेच्चिन्तानाशोऽस्मात् वासनाक्षयः ।
वासनाप्रक्षयो मोक्षः सा जीवन्मुक्तिरिष्यते ॥

सद्वासनास्फूर्तिविजृम्भणे सति
ह्यसौ विलीना ह्यहमादिवासना ।
अतिप्रकृष्टाप्यरुणप्रभायाम्
विलीयते साधु यथा तमिस्रा ॥

स्थितप्रज्ञो यतिरयं यस्सदानन्दमश्नुते ।
ब्रह्मण्येव विलीनात्मा निर्विकारो विनिष्क्रियः ॥

ब्रह्मात्मनोः शोधितयोरेकभावावगाहिनी
निर्विकल्पा च चिन्मात्रा वृत्तिः प्रज्ञेतिकथ्यते ॥
सुस्थिता सा भवेद्यस्य जीवन्मुक्तः स उच्यते ।

उपाधितादात्म्यविहीनकेवल
ब्रह्मात्मनैवात्मनि तिष्ठतो मुनेः ।
प्रारब्धसद्भावकथा न युक्ता
स्वप्नार्थसम्बन्धकथेव जाग्रतः ॥

प्रारब्धं सिद्ध्यति तदा यदा देहात्मना स्थितिः ।
देहात्मभावो नैवेष्टः प्रारब्धं त्यज्यतामतः ॥

शरीरस्यापि प्रारब्धकल्पना भ्रान्तिरेव हि ।
अध्यस्तस्य कुतस्सत्वमसत्वस्य कुतोजनिः ॥

अजातस्य कुतो नाशः प्रारब्धमसतः कुतः ?
ज्ञानेनाज्ञानकार्यस्य समूलस्य लयो यदि ॥

तिष्ठत्ययं कथं देहः इति शङ्कावतो जडान् ।
समाधातुं बाह्यदृष्ट्या प्रारब्धं वदति श्रुतिः ॥

न तु देहादिसत्यत्वबोधनाय विपश्चिताम् ।
यतः श्रुतेरभिप्रायः परमार्थैकगोचरः ॥" इति ।

युज्यते चैतत्

न निरोधो न चोत्पत्तिः
न बद्धो न च साधकः ।
न मुमुक्षुः न वै मुक्तः
इत्येषा परमार्थता ।। "

इति भगवत्पादैरेवाभिहितत्वात् मुमुक्षोः मुक्तस्य च भेदाभावे, जीवन्मुक्तस्य विदेहमुक्तस्य च भेदाभावः स्वाभाविकः इति सर्वमेतन्निर्गुणोपासनया सिद्धमधिकृत्य विमृष्टम् । चतुर्थाध्याये सङ्कल्पाधिकरणे सगुणविद्याफलं प्रपञ्चयता तत्रभवता अन्नम्भट्टेन अर्चिरादिमार्गेण ब्रह्मलोकं गतस्य अनन्याधिपतित्वं प्रतिपादितम् । अभावाधिकरणे बादरिमतं जैमिनिमतं च पर्यालोच्य बादरायणोऽपि स्वमतं व्यक्ति तस्यैव सशरीरत्वमशरीरत्वमुभयविधित्वं सम्भवतीति । तदनुसारेणैव मिताक्षरावृत्तिं रचयता तत्रभवता अन्नम्भट्टेनापि व्याख्यातम् । सगुणोपासकस्य मुक्तस्य ब्रह्मलोकं ज्ञातस्योभयविघित्वं यदा युज्यते अर्थात् भेदाभावः शरीरधारणे अधारणे च, तदा निर्गुणोपासकस्य शरीरं धारयतः त्यजतो वा भेदो न स्यात्, यतः ब्रह्मविद् ब्रह्मैव भवति नित्यसिद्धतया, उपासनाभेदस्याकिञ्चत्करत्वात् ।

इदमुक्तं भवति :-- सगुणब्रह्मोपासनया मुक्तस्य ब्रह्मलोकमधितिष्ठतः परस्यान्ते ब्रह्मणा सह प्राकृतिकलये सति आवृत्तिः न भवति या अनावृत्तिः क्रममुक्तिरितीर्यते । निर्गुणब्रह्मोपासकस्य तु तावान् विलम्बो नास्ति यावद्देहधारणं मुक्त एव तिष्ठति देहत्यागे च विदेहकैवल्यमुक्तं यदात्यन्तिकप्रलयशब्देन व्यवह्रियते तस्य ।

अत्र पुनः जीवन्मुक्तस्य ब्रह्मलोकमधितिष्ठतः मुक्तस्य च तुलना क्रियते, उभयोरपि विदेहकैवल्याप्राप्तेः। तथापि विशेषस्तु भवति, "विशेषं च दर्शयति" ४-४-१६ इतिसूत्रं तत्र भवति प्रमाणम् । "स चायं फलविशेषः प्रतीकतन्त्रत्वादुपासनानामुपपद्यते" इति भाष्यम् । फलविशेषमिहम्ना ब्रह्मलोकस्थितो मुक्तः शरीरेन्द्रियसहितो भवति

तद्रहितो वा भवति इत्युक्तं बादरायणेन। विदेहकैवल्यात् प्रागेव ब्रह्मलोक-स्थितो जीवः मुक्त इतीड्यते यदा शरीरत्यागसहभावावकिञ्चित्काराविति च प्रोच्यते तदा इहलोकस्थस्य निर्गुणोपासनया लब्धात्मज्ञानस्य जीव-न्मुक्तस्य विषयेऽपि शरीरत्यागसहभावावकिञ्चित्करौ, विदेहमुक्तस्य जीव-न्मुक्तस्य च न कश्चित् भेदः इति वक्तुं युज्यते।

प्राकृतिकलयं यावत् ब्रह्मणा सह तिष्ठतां देहबन्धे सत्यपि यः अपोद्यते, स देहबन्धः अन्तिकाले मनुष्यशरीरं त्यक्ष्यतः जीवन्मुक्तस्यापि न स्यात्, विदेहमुक्तस्य जीवन्मुक्तस्य च तारतम्यं न स्यात्। "ज्ञानादेव तु कैवल्यं" "एकं वेदान्तविज्ञानं स्वानुभूत्या विराजते" इत्यभियुक्तोक्ती अनुसृत्य ब्रह्मात्मैक्यसम्यग्दर्शनक्षणे एव मुक्तिरिति प्रतिज्ञायते।

अन्यथा सगुणब्रह्मोपासनाफलस्य निर्गुणब्रह्मोपासनाफलस्य भूयान् भेदः प्रदर्शितः स्यात्। ब्रह्मलोकगमन एवैकः मुक्त उच्यते देह-सहभावश्चैच्छिकः प्रोच्यते एकत्र, अन्यत्राज्ञानलेशस्यानपगमात् प्रारब्ध-स्यानुवर्तनेन जीवतीत्यवरत्वं चोच्यते।

सगुणस्य निर्गुणस्य च ब्रह्मण ऐक्यात् तदुपासकानां तत्फलभूत-विदेहकैवल्यमप्येकमेव। फलबलात् तत्पूर्वभाविजीवन्मुक्तदशापि समानैव देहबन्धे दृष्टे अदृष्टे वा ज्ञानस्याप्रतिहतप्रसरात्।

(०)

# अन्नम्भट्टः हरिदीक्षितश्च

सतीष्वपि ब्रह्मसूत्रवृत्तिष्वनेकासु अन्नम्भट्टवृत्तेः मिताक्षरायाः, हरिदीक्षितवृत्तेश्च मिथः साम्यं बहूपलभ्यते। द्वयोरपि वृत्त्योः भाष्य-पंक्तिभिः वैयासिकन्यायमालापंक्तिभिश्च बहुत्र समानानुपूर्वीकत्वमवगम्यते। अन्नम्भट्टकृतब्रह्मसूत्रवृत्तिं पर्यालोच्य केषुचित् स्थलेषु विवरण मधिकमावश्यकं कुर्वता हरिदीक्षितेन वृत्तिरन्या निरमायीति वक्तुं हरिदीक्षितश्च तत्र तत्रान्नम्भट्टं कण्ठतः अभिधाय तद्रचितवृत्तिविशेषान् मतान्तरत्वेनोदाजहार। ततश्च सुवचमेतत् मिताक्षरा हरिदीक्षिनेन सम्यक् परिशीलितेति। अन्नम्भट्टवृत्ते-रपेक्षया च हरिदीक्षितवृत्तिः सरसतरा मनोरमा च वीक्ष्यते। प्रतीयते चैतत् यथा मिताक्षरापरिशीलनेन समधिकलाभान्वितो बभूव ततश्चारुतरां च वृत्तिं रचयितुमुप्रक्रान्तवान् हरिदीक्षितः इति। तथाहि :— जन्माद्यधिकरणे शिव एव जगत्कर्ता यो ब्रह्माणमसृजत् इति हरिदीक्षित-वृत्तावुक्तं मिताक्षरायां संहाररुद्रादिति प्रमादवचनं लक्षयति। अस्य विवृत्तिरन्यत्र कृता चास्माभिः।

"लिङ्गाच्च ४-१-२ इति सूत्रव्याख्याने अत्रायं भाष्यसंग्रहः इत्युक्त्वा भवतु नाम साध्यफलेषु ..... तस्मादावृत्तिः कर्तव्या इति पर्यन्तं हरिदीक्षितवृत्तौ कृतं विवरणं महावाक्यं परोक्षज्ञानमपरोक्षज्ञानमपि जनयत्यधिकारिभेदेनेति स्पष्टमुद्बोधयति। अन्नम्भट्टवृत्तौ तु संक्षेपेण सूत्रमात्रं विवृतम्।

"आप्रायणात् तत्रापि हि दृष्टम्" ४-१-१२ इति सूत्रव्याख्याने च" ततो दृष्टोपायत्वादामरणमावृत्तिः कर्तव्या, यद्यप्येतान्यष्टावधि-करणानि साधनविचारत्वात्। पूर्वाध्याययोग्यानि तथापि फलं प्रत्यासन्न-साधनत्वात् फलाध्याये रचितानि" इति हरिदीक्षितेन श्रवणमनन-

निदिध्यासनानां प्राधान्यमावश्यकस्थले आविष्कृतमुपपादितञ्च । तत्र-भवता अन्नम्भट्टेन तु संग्रहेण भाष्यमनूदितम् संग्रहेण ।

मुक्तः प्रतिज्ञानात् ४-४-२ इति सूत्रे हरिदीक्षितः अविद्यानिवृत्ति-विचारं भाष्यानुरोधेन प्रपञ्चितवान्; अयं च विचारः मिताक्षरायां समन्वयाधिकरणोक्तं विषयं परिष्कारोतीवाविद्यानिवृत्तिप्रसङ्गे ।

"दर्शयतश्चैवं प्रत्यक्षानुमाने" ४-४-२० इति सूत्रे च हरिदीक्षितः शब्दस्यापरोक्षज्ञानजनकत्वमुपादाय व्याख्यातवान्, "एतादृशं च व्याख्यानं श्रुतिमभिधातुं सूत्रे प्रत्यक्षपदमुपात्तर्मिति तत्स्वारस्यमवगमयति"- एवं रीत्या तत्र तत्र सूत्रस्थपदानामुल्लेखनं हरिदीक्षितवृत्तौ शोभते । भाष्य-संग्रहोद्धारश्च कृतः आवश्यकस्थलेषु यत्रान्नम्भट्टः अतिसंक्षेपपरायणः अभवत् ।

"विरोधः कर्मणीति चेत् नानेकप्रतिपत्तेः दर्शनात्" १-३-२७ इति सूत्रे हरिदीक्षितकृता वृत्तिः मिताक्षरानुवाद एव ।

प्रथमाध्याये चतुर्थपादे तृतीयसूत्रव्याख्यायां अन्नम्भट्टस्य हरिदीक्षि-तस्य चैका रीतिः दृश्यते । तथाहि :- "सूक्ष्मं तु तदर्हत्वात्" "तदधीन-त्वादर्थवत्" इति सूत्रद्वयस्यापरा व्याख्याशरीरं द्विविधं स्थूलं सूक्ष्मंचेति.. व्यवहारस्य" इत्याकारा हरिदीक्षितवृत्तिः मिताक्षरानुवाद एव । "अधि-ष्ठानानुपपत्तेश्च २-२-३९ "कारणवच्चेन्न भोगादिभ्यः" २-२-४० इति सूत्रद्वयस्यापरा व्याख्या इत्युपक्रम्य हरिदीक्षितेन यद्रचितं तदन्नम्भट्टानु-वादित्वमेव । "न वायुक्रिये पृथगुपदेशात्" २-४-९ इति सूत्र व्याख्यायां हरिदीक्षितः अन्नम्भट्टमनुचकार । विद्यारण्यपादास्तु प्राण एव ब्रह्मण-श्चतुर्थः पादः स वायुना ज्योतिषा भाति इति श्रुत्यन्तरे चतुष्पात्ब्रह्मो-पासनाप्रसङ्गेनाध्यात्मिकप्रणस्याधिदैविकवायोश्च अनुग्राह्यानुग्राहकरूपेण विभेदः स्पष्टमेव निर्दिष्टः । "अनः यः प्राणः स वायुः" इत्येकत्वश्रुतिः कार्यकारणयोरभेदवृत्त्या नेतव्या । तस्मात् तत्त्वान्तरं प्राणा इत्याहुः" इति हरिदीक्षितः विद्यारण्यमतस्यानुवादमकरोत् नत्वन्नम्भट्टः ।

"त इन्द्रियाणि तद्व्यपदेशादन्यत्र श्रेष्ठात्" २-४-१६ इति सूत्र-व्याख्यायां हरिदीक्षितेन च मनसः इन्द्रियत्वमङ्गीकृतम्। अस्मिन् प्रसङ्गेऽपि अन्नम्भट्टस्य हरिदीक्षितस्य च मतैक्यं स्पष्टम्। धर्मराजाध्वरि-प्रणीतवेदान्तपरिभाषायां तु मनसः इन्द्रियत्वं निषिद्धम्। अन्नम्भट्टव्या-ख्यातरीत्या च मनसः इन्द्रियत्वमङ्गीकृत्य परिभाषामतमन्यत्र खण्डित मस्माभिः।

"पत्युरसामञ्जस्यात्" २-२-३६ इति सूत्रे हरिदीक्षितः पाशुपत-वैष्णवमते अनूद्य अखण्डयत्। "एते भाष्यानुक्ता अपि प्रसङ्गादुक्ताः। तथाचैतेषां वादिनां मतेषु यथा कुलालः अनुपादानभूतः मृत्पिण्डदण्डचक्रा-दीनि साधनानि नियच्छन् कर्ता भवतीति प्राप्ते ब्रूमः :— पत्युरसामञ्ज-स्यादिति। पत्युरीश्वरस्य सर्वाधिष्ठातृत्वेन तटस्थकारणत्वमेव नतूत्पादनत्वमिति नोपपद्यते। कस्मात् असामञ्जस्यात्। केवलनिमि-त्तत्वे वैषम्यनैर्घृण्यदोषद्वयस्य दुष्परिहरत्वमेवासमञ्जसम्, तस्मादित्यर्थः। प्राणिकर्मापेक्षत्वाददोष इति चेन्न। कर्मेश्वरयोः प्रवर्तयितृत्वे अन्योन्या-श्रयदोषप्रसङ्गात्। कथं तर्हि त्वया दोषः परिहृत इति चेत्प्राणिकर्म-सापेक्षत्वादिति ब्रूमः। तथात्वे श्रुतयः प्रामाणमस्माकम्, त्वयाप्यन्ततो गत्वा श्रुतयश्चेदङ्गीक्रियन्ते तर्हि तटस्थत्वं परित्याज्यं स्यात्। "सोऽकाम-यत बहुस्यां प्रजायेय" इत्यादिश्रुतीनां ब्रह्मणो विवर्तप्रतिपादकानां विरोधात्। तस्मान्नयुक्तस्तटस्थेश्वरवादः। यत्तु परेणोक्तम्—पत्युरज्ञजनप्रसिद्धेश्वरस्य जगत्कारणत्वं न युक्तम्, पारतन्त्र्यादिदं षग्रस्तत्वेनासामञ्जस्यादिति तदसत्। ईश्वरद्वेषप्रयुक्तत्वेन श्रुत्यसम्मतत्वात्। तन्मतखण्डनं तत्व-कौस्तुभे अनुसन्धेयम्। कथं तर्हि पाशुपतमतं त्वया नोपादीयते इति चेत् साक्षात् विष्णोः कपिलस्य बुद्धस्य च मतं यथा नोपादीयते तद्वदित्यवगच्छ" इति नवीनविषयं विस्तरेण प्रतिपाद्य हरिदीक्षितः अदस्सूत्रव्याख्यायामन्न-म्भट्टादग्रसरोऽभवत्।

"एतेन सर्वे व्याख्याताः व्याख्याताः" १-४-२७ इति सूत्रे हरि-दीक्षितरचितेयं पंक्तिः भाष्यकारेभ्यः पृथगाशयमन्नम्भट्टस्य स्थापयति :—

"एतेन = एकविज्ञानेन सर्वविज्ञानप्रतिज्ञाविरोधेन परमाण्वादि-कारणवादाः प्रतिषिद्धतया व्याख्याता इति विद्यारण्यान्नम्भट्टपादावूचतुः" इति । एतेनेतिसूत्रस्थपदस्य व्याख्यानं वैयासिकन्यायमालानुसारेण मिताक्षरायां कृतं न तु भाष्यपंक्त्यनुरोधेनेति स्पष्टम् । किमिदं साम्प्रतमित्यत्र यथामति वक्ष्यामः ।

"उपसंहारदर्शनात् नेति चेन्नक्षीरवद्धि" २-१-२४ इति सूत्रे हरिदीक्षितेनोल्लेखितम् "अत्र विद्यारण्यपादानां व्याख्या-एकमेवाद्वितीयं ब्रह्म—सम्भवतीति । आचार्यपादैः सिद्धान्ते क्षीरदृष्टान्तो योजितः विद्यारण्यपादैस्तु पूर्वपक्षे । "किमत्र युक्ततरं सुधियो विदांकुर्वन्तु" इति । तत्रभवानन्नम्भट्टस्तु शङ्करभाष्यमेवान्वसरत् क्षीरं च दृष्टान्ते योजितवान् सिद्धान्ते । किं साम्प्रतमिति परस्तात् यथामति द्रक्ष्यामः ।
"व्यतिरेकानवस्थितेश्चानपेक्षत्वात्" २-२-४ इति सूत्रवृत्तौ हरिदीक्षितः अन्नम्भट्टमुदाजहार - अत्रान्नम्भट्टैः व्याख्यातम् "सर्वदा महदाद्याकारेण परिणाम एव स्यात् न तु कदाचिदपि तस्य व्यतिरेकः । व्यतिरेकस्यानवस्थितेरिति व्यतिरेकाभावादित्यर्थः, कुतः अनपेक्षत्वात् चेतनापेक्षत्वादिति ।

"वैधर्म्याच्च न स्वप्नादिवत्" २-२-२९ सूत्रे हरिदीक्षितः अवोचत् "अनिर्वचनीयालम्बनन्तु तत्राप्यस्त्येवेति मन्तव्यमिति अन्नम्भट्टा आहुः" इति ।

"क्षणिकत्वाच्च" २-२-३२ इति सूत्रवृत्तौ हरिदीक्षित उवाच-"नाभाव उपलब्धेः, वैधर्म्याच्च न स्वप्नादिवत्, न भावोऽनुपलब्धेः इति सूत्राणि शून्यवादनिराकरणेऽपि योजनीयानि--- इति अन्नम्भट्टैः शून्यवादपरतयेमानि सूत्राणि व्याकृतानि । भाष्यकारैस्तु "शून्यवादपक्षस्तु सर्वप्रमाणप्रतिषिद्धः इति तन्निराकरणाय नादरः क्रियते इत्युपेक्षितः" इति ।

साम्प्रतमेव कृतं तत्रभवता अन्नम्भट्टेन भाष्यानुगुणसरण्या विस्तरः कृतः शून्यवादनिराकरणे । तत्रभवतः अन्नम्भट्टस्य वृत्तिं कण्ठतः ब्रुवता हरिदीक्षितेन च न केवलं वृत्तिकृतामितरेषां वचनेष्वादरः प्रकाशितः अपि तु पक्षान्तरप्रतिपादनेन तेषां मूल्याङ्कनमपि कृतम् । इतरवृत्तिष्वनुपलभ्यमानामर्थात् अनिर्दिष्टामन्नम्भट्टरचितां वृत्तिमुदाहरता मिताक्षरायां स्वस्याभिरुचिः प्रकटिता हरिदीक्षितेन । यत्र पुनः हरिदीक्षितस्यान्नम्भट्टस्य च पंक्तिः वैयासिकन्यायमालामनुकरोति भाष्यपंक्तिं तद्व्याख्यापंक्तिं वानुसरति तत्र समान एवानयोरभिप्रायः पूर्वपथानुसरणं च समानमितिस्फुटम् । यत्र पुनः अन्नम्भट्टेन संक्षिप्तः अर्थः हरिदीक्षितेन विवृतः तत्र हरिदीक्षितः श्लाघापात्रं सञ्जातः । अपि च यत्र शाङ्करभाष्यात् वैयासिकन्यायमालातश्च विशिष्टं किमपि मिताक्षराप्रोक्तं लक्षितं हरिदीक्षितेन तत्र निस्सन्देहमन्नम्भट्टः श्लाघापात्रं सञ्जातः स्वोपज्ञाविभावात् हरिदीक्षितवृत्तौ स्वस्योल्लेखनाधिगतगौरवाच्च । किन्तु हरिदीक्षितस्य अन्नम्भट्टस्य च मतभेदः आर्जवेनार्थात् मुख्यतया यत्र लगति तत्र कतरो वरीयानिति विमृश्यम् । तादृशश्च प्रसङ्गः न लक्षितोऽस्माभिः । वर्णकान्तरत्वेन मिताक्षरावचनपरिग्रह एवान्नम्भट्टे हरिदीक्षितस्यादरभावं व्यनक्ति । हरिदीक्षितेनोल्लेखिता इति हेतुमालम्ब्य मिताक्षराविशेषज्ञाने सहकार एव प्राप्तः अस्माभिः कतिपयस्थलेषु । मिताक्षरायां लक्षणीयांशेषु तादृशस्थलानां विशिष्य विचारः प्रस्तुतः । "परवर्तिनां विदुषां हृदयेषु च प्रतिष्ठामवाप्ता अन्नम्भट्टब्रह्मसूत्रमिताक्षरातद्रचितवृत्तिष्वपि तस्या उल्लेखात्" – इति अन्नम्भट्टवृत्तिमधिकृत्य सनिदर्शनं वक्तुं वयं पारयामः एतावता प्रबन्धेन ॥

-०-

# मिताक्षरायां लक्षणीयांशाः

सर्वतन्त्रस्वतन्त्रः तत्रभवानन्नम्भट्टः चतुर्षु पदवाक्यप्रमाणवेदान्त–शास्त्रेषु ग्रन्थरचनया लब्धप्रतिष्ठः विराजते ।

अत्र केचिदाशेरते :– इतरप्रणीतग्रन्थानां व्याख्यारूपा एव भूयांसो ग्रन्थाः तत्रभवतः । येऽपि द्वित्राः अन्नम्भट्टस्य स्वरचिता ग्रन्थाः ते पूर्वाधिगतशास्त्रविषयसंग्रहाकारा एव । तस्मात् स्वोपज्ञया न कस्यापि शास्त्रस्य मार्गे नवीनदिशाप्रदर्शकग्रन्थनिर्माणदक्षः अयमासीदिति ।

नैतदुक्तं समञ्जसम् । मन्यामहे यत् उपज्ञा त्रिविधा स्यात्, प्रथमा, नवीनोपक्रममारचयति द्वितीया उपक्रान्तविषयस्य विमर्शेन विस्तृतिं तनोति, तृतीया चातिविस्तृतविषयस्य संग्रहेण प्रकाशं करोति । उपक्रमकर्तुः प्राशस्त्यमनन्यादृशं जेगीयते तदितरयोः न तथा इति च न वक्तव्यम् । पाणिनेः व्याकरणप्रणेतुः सुस्थिरं यशः, वार्तिककारस्य वररुचेः महाभाष्यकर्तुः पतञ्जलेश्च नाम्नोः स्थेमानं नापाकरोति । प्रत्युत, यथोत्तरं मुनीनां प्रामाण्यम् इति हि रूढिः, सूत्रकारादपि भाष्यकारस्यानपहीयमानं यशः कीर्तयति । तथैव व्याकरणसारसंग्रहकर्तुः वैयाकरणसिद्धान्तकौमुदीं रचितवतः भट्टोजोदीक्षितस्य कापि नवीना कीर्तिरुज्जृम्भते सत्यपि भाष्ये ।

"कौमुदी यदि कण्ठस्था वृथा भाष्ये परिश्रमः ।
कौमुदी यद्यकण्ठस्था वृथा भाष्ये परिश्रमः ॥"

इति वाचोयुक्तिर्विदुषां विदिता खलु । सृष्टिस्थितिलयकर्तॄणां ब्रह्म–विष्णुमहेश्वराणां मध्ये वरिष्ठः कश्चिदवरः कश्चिदिति न कोऽपि मनुते । तथा च सूत्रकर्तुः बादरायणस्य भाष्यकाराणां शङ्करभगवत्पादानां च

शेमुष्यौ तत्कार्यभूतसमज्ञे च पृथक्प्रतिष्ठां विन्दतः। तत्सारसंग्रहकर्तुः भारतीतीर्थमुनेः वैयासिकन्यायमालारचनाद्वारा च सुस्थिरं स्थानम् "इष्टं हि विदुषां लोके समासव्यासधारणम्" इत्यभियुक्तोक्तिः समीचीना लक्ष्यते। अत एव सर्वेषु शास्त्रेषु प्रकरणग्रन्थाः, विषयं संक्षेपेण समग्रतया विशदयन्तः, स्वोचितां प्रतिष्ठां स्वकर्तॄन् प्रापयन्ति। तथाहि, सत्यपि शङ्करभगवत्पादभाष्ये, वेदान्तपञ्चदशी कर्तुः विद्यारण्यमुनेः, परिभाषाकारस्य धर्मराजध्वरीन्द्रस्य संक्षेपशारीरककृतः सर्वज्ञमुनेः," वेदान्तसारप्रणेतुः सदानन्दस्य, सिद्धान्तलेशसंग्रहकर्तुः अप्पयदीक्षितस्य च प्रत्येकं समुचितं प्रधानं स्थानमधिगतं शास्त्रकाराणां मध्ये। अपि च प्रसन्नगम्भीरं भाष्यं प्रणीतवतां श्रीशङ्करभगवत्पादानां विवेकचूडामणिः साधनपञ्चकस्तोत्रम् भजगोविन्दस्तोत्रम् च तादृशीमेव मनोज्ञतां प्रचारं समधिकं चालभन्त, यादृशीं मनोज्ञतां भगवत्पादभाष्याणि। समग्रं निगूढमुपनिषद्विषयं सकलजनमनोग्राहितामवलम्बयितुं भगवत्पादानां सरललघुरचनाः आकल्पं कल्पन्ते। समञ्जसरीत्या सौलभ्याय प्रमेयसंग्रहणकौशलमनन्यादृशं भगवत्पादानां, येन तद्रचिता लघुस्तोत्रग्रन्थाः प्रकरणायन्ते, वेदान्तशास्त्राध्येतॄणां कृते, समधिकतरं प्रचारं च विन्दन्ति भाष्येभ्योऽपीति वचने न काप्यतिशयोक्तिः। तस्मात् शास्त्रप्रमेयसंग्रह–रचना, कर्तुः कूलङ्कषपाण्डित्यं निरुपमं कौशलं च प्रकाशयति प्रतिभा चास्याद्वितीयामुपज्ञां निरूपयति। तादृगुपज्ञावत्सु च तत्रभवतः अन्नम्भट्टस्य मूर्धन्यं स्थानमिति वक्तव्यम्। तथाहि :- प्राचीना नैयायिकाः प्रमाणनिरूपणानन्तरं पदार्थनिरूपणमकुर्वन्। आरम्भे प्रमाणनिरूपणं दुर्बोधं सत् शास्त्रोद्देश्यं न स्फुटमभवत्। प्राचीनग्रन्थेषु च प्रत्येकं भागस्य प्राधान्यमाविष्कृतम्, प्रमेयविषयश्च सुगमो नाभवत्। तदेतत् पर्यालोच्य तत्रभवता अन्नम्भट्टेन, न्यायशास्त्रप्रमेयसामग्री समग्रतया संक्षेपेण च विवृता तर्कसंग्रहनाम्ना। अस्मिन् प्रकरणग्रन्थे प्रमेयविषयान् प्रतिपाद्य तन्निरूपणाय, तत्रभवान् प्रमाणानि साधनत्वेनाग्रहीत्। तर्कसंग्रहे क्रमपरिणामेण विषयस्य सुबोधत्वात् तत्रभवतः संग्रहरचनायाः

आसेतुशीताचलं न्यायशास्त्रपठनपाठनयोः प्रथमं स्थानं लब्धम् । तर्कसंग्रहदीपिका च बालगदाधरीति ख्याता, संग्रहात् परमवश्याध्ययनीया सञ्जाता । ईदृशमेव सौलभ्यं जनयता वैयाकरणानां कृते, तत्रभवता । अन्नम्भट्टेन पाणिनिसूत्राणां मिताक्षरावृत्तिः प्रणीता, यया काशिका गतार्था तथैव ब्रह्मसूत्राणां च सुलभावगाहनाय मिताक्षरावृत्तिः रचिता या खलु शाङ्करभाष्यभामतीकल्पतरुविवरणवैयासिकन्यायमालासारांशरूपा वरीवर्ति। अधिकरणानां सारांशमाविष्कुर्वती वैयासिकन्यायमाला ब्रह्मसूत्राणामतिसंक्षिप्तमर्थं बोधयति । ब्रह्मविद्याभरणप्रभृतयो ग्रन्थाः अतिविस्तरेण गहनं विषयं प्रतिपादयन्तः पठितॄणां सुलभावगाहाः न सन्ति । अन्याश्च व्याख्याः इतरव्याख्याविषयान् नान्तर्भावयन्ति । अतश्च शङ्करभाष्यमनुसृत्य पूर्वव्याख्याविषयांश्च संग्रहेण विवृण्वती कापि वृत्तिः ब्रह्मसूत्राणां रचनीयेति तत्रभवतो मनसि संकल्पस्सञ्जातः । प्रतिज्ञातं च तत्र भवता ।

"विश्वेश्वरं नमस्कृत्य ब्रह्मसूत्रार्थबोधिकाम् ।
वृत्तिं मिताक्षरां कुर्वे भामत्यादिमतानुगाम् " ।। इति ।

तस्मादिदं विज्ञातमस्माभिः यत् ब्रह्मसूत्रमिताक्षरा वृत्तिः वेदान्तसूत्रमुक्तावल्यादिव्याख्याभ्यः संक्षिप्ततरा, ब्रह्मसूत्रदीपिकापेक्षया विपुला भामत्यादिपूर्वव्याख्याविशेषसंग्रहणे चाद्वितीया वैयासिकन्यायमालासरणिमाश्रित्य सूत्रार्थं (न त्वधिकरणार्थं) वर्णयन्ती चकास्ति । अत एव भाष्यकल्पतरुवैयासिकन्यायमालासमानुपूर्वी तत्र तत्र दृश्यते । सुवचमेतत् ततः, ब्रह्मसूत्रमिताक्षरायाः अन्नम्भट्टरचितायाः शाङ्करसूत्रभाष्यसंग्रहज्ञानाय समुपादेयता अनन्यादृशी साक्षात्प्रकरणग्रन्थत्वेन स्वीकार्यत्वात् भेदनिरासस्यैतद्रचितस्यान्यप्रकारेणाद्वैतप्रकरणत्वात् चेति । एतदनुसरणमावहता हरिदीक्षितेन चैतन्निदर्शितम् । तर्कसंग्रहदीपिकाव्याकरणमिताक्षरासु शास्त्रप्रमेयसंग्रहणदुरन्धरस्य अत्रापि तत्रभवतः भाष्यप्रमेयव्याख्यासंक्षेप एव मतिरासीत् न तु स्वकपोलकल्पनायामिति तद्विदो जानन्ति । सर्वशास्त्रार्थवेदिना तत्रभवता अन्नम्भट्टेन पदवाक्यप्रमाणेषु ग्रन्थान् विरचय्य चरमे

वयसि ब्रह्मसूत्रभाष्यं मननपथमवतारयितुं मिताक्षरारचनोद्यमः स्वीकृतः इति नः प्रतिभाति । वृत्त्यानया परोक्षशिष्याः अस्मादृशः अनुगृहीता भाष्यमक्लेशेनाधिगमिष्यन्तीति निर्विवादम् । तस्मादधिकरणार्थसंग्रह-कारिण्या वैयासिकन्यायमालया साकं सूत्रार्थसंग्रहकारिण्या मिताक्षराया विशिष्टं स्थानं स्थिरमिति प्रतीमः ।

तत्रभवानन्नम्भट्टः स्वापूर्वप्रतिभया नव्यपथानुगामी व्याख्यातॄणां मध्ये विलक्षण एव लक्ष्यते । तथाहि :- महाभाष्यप्रदीपोद्योतने पाणिनिः शास्त्रप्रयोजनमनुक्त्वा कथमारम्भं कृतवानिति पूर्वपक्षं समाधत्ते, "शास्त्रोक्तप्रयोजनं शास्त्रप्रवृत्त्यहेतुः शास्त्रप्रवृत्तस्य प्रयोजनज्ञानं तस्माच्च प्रवृत्तिरिति अन्योन्याश्रयात् । सिद्धार्थं ज्ञातसम्बन्धं श्रोतुं श्रोता प्रवर्तते, शास्त्रादौ तेन वक्तव्यः सम्बन्धः सप्रयोजन इति वार्तिकस्य, शास्त्रं तेन प्रणेतव्यं ससम्बन्धप्रयोजनम् इत्युत्तरार्थं वक्तव्यम्" इति । ग्रन्थारम्भे प्रयोजननिर्देशपरान् सर्वान् शास्त्रकारानेकपदे तिरस्कृत्य अनुबन्ध-चतुष्टयनिर्देशमनावश्यकं मन्यते मिताक्षराकर्ता । अत एवानुबन्धचतुष्टये सम्बन्धमपाकृतवान्; अधिकारिविषयफलत्रयमागमिकमिति च ब्रूते जिज्ञासा सूत्रवृत्तौ तत्रभवानन्नम्भट्टः । तथापि श्रुतौ अधिकारी प्रोक्तः तदालम्बनश्च ब्रह्मसूत्रग्रन्थः इति, सम्प्रदायानुरोधेन जिज्ञासासूत्रं न्यायेन निर्णयति अपेक्षिताधिकारिविषयफलत्रयमिति व्याचष्टे । बोध्यबोधकभावादृते को वा सम्बन्धः भवितुमर्हति प्रमेयस्य प्रमाणस्य चान्तराले? अत एव सम्बन्धः परित्यक्तः संक्षेपनिपुणमतिना तत्रभवता । निर्दिष्टं चैतत् त्रयं जिज्ञासाधिकरणान्ते साधनचतुष्टयसम्पन्नः प्रमाता अधिकारी, ब्रह्म विषयः, ब्रह्मज्ञानं च प्रयोजनमिति । ब्रह्मात्मैक्यप्रमेयस्य तत्प्रतिपादकोपनिषत्-प्रमाणस्य च बोध्यबोधकभावसम्बन्धः वेदान्तसारेऽभिहितः, स एवात्रानु-सन्धेयः ।

जिज्ञासासूत्रविवृत्तौ "अहंप्रत्ययस्य मनुष्योऽहं इत्यादौ परैरपि भ्रमत्वाङ्गीकारात् कर्तृत्वाद्यंशेऽपि श्रुतिबलात् भ्रमत्वमास्थेयमिति

नाध्यासानुपपत्तिः" इत्येका पंक्तिः तत्रभवतः षट्सु दर्शनेषु तलस्पर्शि वैदुष्यं व्यञ्जयति वेदान्तदर्शनस्य पृष्ठभूमिं चारचयति।

"यद्यपि नित्यफलेच्छाव्यतिरेकेण नानित्यफले वैराग्यमिति विवेकानन्तरमेव मुमुक्षा युक्ता तथापि वैराग्यादेरधिकारनिमित्तत्वमक्षतमेव"- इति वचनं तत्रभवतः विषयविवेचनचातुर्यं विशदयति। अत्र मुमुक्षा नाम नित्यफलेच्छा इत्यर्थो वर्णितः। इहामुत्रार्थफलभोगविरागः शमादिषट्कसम्पत्तिः नित्यानित्यवस्तुविवेकः ततो मुमुक्षुत्वमिति क्रमः नवीनः सम्भावितः। साधारणतः नित्यानित्यवस्तुविवेकं विना इहामुत्रार्थफलभोगविरागः नास्तीति विवेकसमनन्तरं विरागोऽभिधीयते। तत्रभवांस्तु मुमुक्षाया नित्यफलेच्छारूपत्वात् विवेकानन्तरं मुमुक्षया भाव्यमित्यभिप्रैति। तथापि विवेकस्य मुमुक्षायाश्चान्तराले इहामुत्रार्थफलभोगविरागस्य शमादिषट्कसम्पत्तेश्च सम्भवः अवश्यम्भावी। ताभ्यां विना अविरक्तस्य तत्तद्भोगव्यग्रचित्तस्य शमदमादिरहितस्य मुमुक्षा निश्चला न भवेत् इति। तत्रभवतेदं ज्ञापितं यत् नित्यानित्यवस्तुविवेक एव मुमुक्षाया मूलाधारः तथापि इहामुत्रार्थफलभोगविरागेण शमादिषट्कसम्पत्त्या च समालम्बिता सती मुमुक्षा अग्रेसर्तुं प्रभवति विचारायेति।

मिताक्षरायां विवरणभामतीमतद्वयानुरोधेन जिज्ञासासूत्रं व्याख्यातम्; तत्र श्रवणविधिविचारः जिज्ञासापदलक्षणाविचारश्च सविशेषं कृतः येन पाठकाः बहूपकृताः। तारतम्यपरिशीलनमकृत्वा स्वाभिमतस्यार्धं विवरणमते भामतीमते चार्धं विनिवेशितं तत्रभवता "अस्तु वा श्रवणविधिः तथापि न लक्षणाध्याहारौ" इति व्याहरता। समन्वयाधिकरणस्यान्ते वर्णकान्तरे ज्ञानविधिनिरासायासे पुनः श्रोतव्यपदस्य विधित्वमेव प्रत्याहृतमन्नम्भट्टेन। एतच्च स्ववचनविरुद्धमिति स्फुटम्; यतो हि जिज्ञासाधिकरणे "भगवत्पादैः श्रोतव्य इत्यत्रात्मज्ञानविधिः निराकृतः न तु ज्ञानोद्देशेन विचारविधि

रिति न तद्विरोधोऽपीति" इत्युल्लेखितम्, अन्ते च "अस्तु वा श्रवणविधिः" इति स्वीकारश्च प्रकाशितः। अस्मिन् सन्दर्भे परिष्कारः कर्तव्य एवावशिष्टः अन्नम्भट्टेन। अस्माभिस्तु यथामति "श्रवणविधौ" तदर्थमुद्यमः कृतः अन्यत्र।

"जन्माद्यस्य यतः" इति सूत्रवृत्तौ आद्यस्य चतुर्मुखस्य यतो जन्म तद् ब्रह्मेति तत्रभवता अन्नम्भट्टेन खण्डितः केषाञ्चित्पक्षः। चतुर्मुखस्य हिरण्यगर्भस्य चैक्यमङ्गीकृत्य च व्यवहृतमस्मिन् प्रसङ्गे। ऐक्यं च तयोरस्माभिरन्यत्रोपपादितप्रकारेण न घटते; हिरण्यगर्भशब्दसामर्थ्येनघटेतापि किन्तु "सोऽप्यर्थः सूत्रमूलभूतं लक्षणवाक्यं हिरण्यगर्भपरमिति शङ्कानिरासार्थत्वेन सूत्रावृत्त्या विवक्षितुं शक्यते इति नोपेक्षणीयः" इति न्यायरक्षामणावप्पयदीक्षितोक्तं वचनं साधीयः प्रतिभाति। अपि च "ब्रह्मणः संहार रुद्रादप्युत्पत्तिश्रवणेन" इति यदुक्तं तत्रभवता तदपि प्रामादिकम्।

उक्तं खलु हरिदीक्षितवृत्तौ, "श्वेताश्वतरोपनिषदि शिव एव जगत्कर्ता प्रतीयते, "यदाऽतमस्तन्नदिवा न रात्रिः न सन् नासन् शिव एव केवलः। तदक्षरं तत् सवितुर्वरेण्यं प्रज्ञा च तस्मात् प्रसृता पुराणी"। "सोऽसृजत् दक्षिणादङ्गात् ब्रह्माणं लोकसम्भवम्। वामपार्श्वात् तथा विष्णुं लोकरक्षार्थमीश्वरम्" युगान्ते चैव सम्प्राप्ते रूद्रं शम्भुरथासृजत् इति। श्वेताश्वतरोपनिषदि तृतीयाध्याये चतुर्थमन्त्रश्च "यो देवानां प्रभवश्चोद्भवश्च विश्वाधिपो रुद्रो महर्षिः। हिरण्यगर्भं जनयामास पूर्वं स नो बुद्ध्याशुभया संयुनक्तु" इत्याकारकः। तस्मात् संहाररुद्रात् नोत्पत्तिः किन्तु ब्रह्मविष्णुरुद्राणां मूलभूतात् शिवादेव ब्रह्मणः उत्पत्तिः श्रूयते। तस्मात् ब्रह्मणः उत्पत्तिश्रवणेन "ज्ञेयब्रह्मलक्षणासिद्धे." इति युक्तिर्या अभिहिता सा तु समीचीनैव॥

प्रायशः सर्वत्र मिताक्षरायां संक्षेपगुणः प्रसादगुणसंवलितो दृश्यते। कृत्स्नोऽपि ग्रन्थः संक्षेपगुणस्य सम्यगुदाहरणं जायते। शास्त्रान्तरसम्पर्कप्रसङ्गेषु दुरूहत्वं न प्रसादगुणभञ्जकं भवति, तत्तु व्युत्पत्तिहीनानां

दौर्भाग्यमवगमयेत् । तान् प्रसङ्गानपहाय यत्र क्वचिदन्वयक्लेशः तत्रैव प्रसादस्य भङ्गस्तर्क्यते । तथाहि :— नैकस्मिन्नप्यसम्भवात् २-२-३३ इति सूत्रस्य व्याख्यायां" प्रतिवादिनश्चतुर्विधाः सद्वादिनः असद्वादिनः सदसद्वादिनः अनिर्वचनीयवादिनश्चेति । तत्र अनिर्वचनीयवादिनोऽपि पुनश्च सदादिविषयत्वमेलनेन त्रिविधाः । अन्यवादिनः केवलसदादिविषयत्वेन त्रिविधाः । एवं सप्तविधान् वादिनः प्रति सप्तविधा न्यायाः प्रयोक्तव्याः इति मिताक्षरायामुक्तम् । पंक्तीरेनाः वाचयतः, वादिनां षड्विधत्वं प्रतीयते न तु सप्तविधत्वम् । वस्तुतः स्यादस्ति इति सद्वादिनः, स्यान्नास्ति इत्यसद्वादिनः, स्यादस्ति च नास्ति च इति सदसद्वादिनः, स्यादवक्तव्यम् इत्यनिर्वचनीयवादिनः, स्यादस्ति चावक्तव्यञ्च इति सदनिर्वचनीयवादिनः, स्यान्नास्ति चावक्तव्यञ्च इत्यसदनिर्वनीयवादिनः, स्यादस्ति च नास्तिचावक्तव्यंचेति सदसदनिर्वचनीयवादिनः इत्युक्तौ सप्तविधा वादिनो लभ्यन्ते ।

स्मर्यते च ४-१-१४ इति सूत्रवृत्तौ तत्रभवता "परन्तु मुह्यन्त्यत्र मन्दभाग्याः" इति पृथग्रचितं वाक्यं स्वतात्पर्यं न विशदीकरोति । किं मन्दभाग्याः देवेभ्यः अन्ये ? अन्ये चेत् देवा मुह्यन्ति इति श्लोकवाक्यस्य का गतिः इति बुद्धिः कालुष्यमुपगच्छति । अत्रोच्यते :— पदैषिणः देवा अपि मुह्यन्ति । पदैषित्वं देवत्वं च समानाधिकरणे स्तः । पदैषित्वं देवत्वमुत्कृष्टमेव । उत्कृष्टा अपि ईदृशाः देवाः अपदस्य पदैषित्वात् मुह्यन्ति; मोहं गच्छन्तीत्यर्थः । किमुत तन्निष्ठाः इति वचनेनेद ज्ञातव्यं यत् तन्नष्ठिास्तु न मुह्यन्ति ये देवेभ्योऽपि उत्कृष्टतरा इत्यर्थः । देवा एव मुह्यन्तीति हेतोः मन्दभाग्या इतीरिताः ।

अन्तरा भूतग्रामवत् स्वात्मनः ३-३-३५ अन्यथा भेदानुपपत्तिरिति चेत् नोपदेशान्तरवत् ३-३-३६ इति सूत्रद्वयव्याख्याने वैयासिकन्यायमालायामेवमुक्तम् :··· "न च पुनरुक्तिः । यथा शाखान्तरे तद्विशेषशङ्कापनुत्त्यर्थं तत्त्वमसीति नवकृत्व उपन्यस्तम् तथात्राप्युपपत्तेः । उक्तब्राह्मणेन देहाद्यात्मत्वशङ्का अपोद्यते, कहोलब्राह्मणेन देहादिव्यतिरिक्तस्य

ब्रह्मत्वमापाद्यते, वाक्यशेषयोस्तथा दर्शनात्। तस्मात् एका, विद्या" इति। अस्मिन्नन्तरत्वाधिकरणे उषस्तब्राह्मणस्य कहोलब्राह्मणस्य च भेदमुदीर्य विद्यैक्ये तात्पर्यमित्युक्तं न्यायमालायाम्। अयंविशेषः मिताक्षरायामुत्सृष्टः इति लक्षणीयम्।

उत्तराच्चेदाविर्भूतस्वरूपस्तु १-३-१९ इत्यादिसूत्रत्रयमधिकरणान्तरत्वेन वैयासिकन्यायमालायां व्याख्यातम्। तत्रभवता तु शङ्करभाष्यानुरोधेन नाधिकरणान्तरमङ्गीकृतम्। दहराधिकरणान्तर्भाग एवमतः। युज्यते चैतत् दहराधिकरणविचारस्यानुगतत्वात्।

द्वितीयाध्यायारम्भे प्रथमद्वितीययोः सूत्रयोः व्याख्यायां न्यायमालापेक्षया मिताक्षरायाः विशिष्टत्वं विस्पष्टम्। तथाहि :—"सांख्यस्मृतिर्हि वस्तुतत्त्वनिरूपणायैव प्रवृत्ता, नत्वनुष्ठेयं धर्मं क्वचिदपि प्रतिपादयति। यदि तस्मिन्नपि वस्तुन्यसौ बाध्येत तदा निरवकाशा स्यात्। तस्मात् अनवकाशया स्मृत्या सावकाशस्य वेदस्य संकोचो युक्तः।" इति वैयासिकन्यायमालायाम्। शाङ्करभाष्यमनुरुध्य तत्रभवान् न्यायमालोक्तं च सुविचार्य मिताक्षरायामेवमूचिवान् "विरोधाधिकरणन्यायेनैव श्रुतिविरोधे स्मृतेरप्रामाण्ये सिद्धेऽपि स्मृतेः स्मृतिविरोधे अप्रामाण्यकथनार्थमयमारम्भः इति प्रथमसूत्रान्ते। द्वितीयसूत्रे "सांख्यादिप्रसिद्धानां प्रधानादितरेषां महदहङ्कारादीनां लोकवेदयोः अनुपलब्धेः तत्स्मृतिः कपिलस्य तावदप्रमाणम्। तत्सामान्यात् प्रधानकारणस्मृतिरप्यप्रमाणम्" इत्युक्तवान्।

कुत्रचित् श्रुतेरनुपलम्भेऽपि स्मृत्युक्ताः धर्माः आद्रियन्ते, अतः वेदेऽनुक्तत्वेऽपि महदहङ्कारादीनां, सांख्यस्मृतिः कुतो नादरपात्रम्? इत्याकारा शङ्का सम्भाव्यते। तथाहि :— गौतमधर्मसूत्रेषु "वेदोऽखिलो धर्ममूलम्" इत्यभिधाय "तद्विदां च स्मृतिशीले" इत्युक्तम्। तस्य व्याख्यायां च "वेदविदां स्मृतिशीले" इत्युक्तम्। तस्य व्याख्यायां "वेदविदां स्मृतिशीले प्रमाणम्, उक्तंचापस्तम्भेन तेषामुत्सन्नाः पाठाः प्रयोगादनुमीयन्ते" इति विशदीकृतम्। तदेतत् पर्यालोच्यते चेत् स्मृतिमात्र-

प्रसिद्धधर्मवत् कापिलस्मृत्युक्तानां महदादीनां प्रामाण्यं स्यात् । ईदृश्याः सम्भावितशङ्कायाः समाधानाय श्रुतिविरोध एव मूलयुक्तिः इदं त्वभ्युच्चयमात्रमिति मिताक्षराप्रोक्तं तत्रभवतः स्मृतितत्त्वनिष्णातत्वं निरूपयति। अतश्चात्र न्यायमालापेक्षया मिताक्षरा निस्संशयमुपादेयतरा लक्ष्यते ।

तदनन्यत्वमारम्भणशब्दादिभ्यः २-१-१४ इति सूत्रव्याख्यायामपि मिताक्षरान्यायमालातः अतिरिच्यते "न चेतावता मृत्तिकायाः सत्यत्वमिति भ्रमितव्यम् । सन्दर्भश्च विकारमिथ्यात्वे कारणसत्यत्वे च तात्पर्यात्, मृथोऽपि विकारत्वाविशेषात् मिथ्यात्वसिद्धेः । एवं दृष्टान्ते वाचारम्भणशब्दात् दार्ष्टान्तिके ब्रह्मव्यतिरेकेण प्रपञ्चस्याभावः प्रतीयते" इति ब्रुवता तत्रभवता जिज्ञासुजनमनस्सु भ्रान्तिलेशः सन्देहलेशः नापनीयते । शङ्करभाष्ये विस्तरेणोक्तस्य संग्रहश्च सुचारुरूपेण रचितः । "न चैतावता मृत्तिकायाः सत्यत्वमिति भ्रमितव्यम्" इत्याकारकं वाक्यं च भाष्यग्रन्थादपि समञ्जसतरं संक्षेपतः ।

मिताक्षरायां संक्षेपप्रवणमतिना तत्रभवतैतावन्मात्रमुक्तम् । भेदनिरासप्रकरणे स्वरचित्ते तु सविशेषमेवं प्रतिपादितं तत्रभवतान्नम्भट्टेनः- "भेदवादिमते अपि भेदः प्रत्यक्षेण न गृह्यते, दूरे ब्रह्मप्रपंचयोः, नहि भेदवादिनामपि मृद्घटयोः भेदः प्रत्यक्षेण गृह्यते, मृदो घटो भिन्नः घटाच्च मृत् भिन्नेति वा, तन्तुभ्यः पटो भिन्नः पटात् तन्तवो भिन्ना इति वा प्रत्यक्षव्यतिरेकेण भेदप्रत्यक्षासम्भवात् । सिद्धान्ते यदुपादानोपादेययोः भेद एव नास्ति, "वाचारम्भणं विकारो नामधेयं मृत्तिकेत्येव सत्यम्" इति श्रुतेः तदनन्यत्वमारम्भणशब्दादिभ्यः इति सूत्राच्च जीवब्रह्मणोरपि भेदो न प्रत्यक्षः। धर्मिद्वयप्रत्यक्षव्यतिरेकेण भेदप्रत्यक्षानुपपत्तेः । ... तथा च तत्वमसीतिवाक्यस्य जीवब्रह्माभेदप्रतिपादकस्य न प्रत्क्षेण विरोधः" । इति ।

पूर्वन्तु बादरायणो हेतुव्यपदेशात् ३-२-४१ इति सूत्रे "इत्येवं तत्त्वं पदार्थौ शोधितौ इति स्थितम्" इति वैयासिकन्यायमालायामतिसंग्रहेणोक्तः विषयः मिताक्षरायामावश्यकविवरणसमेतः प्रकाशितः ।

तथाहि :... "स्वप्नसृष्टिमिथ्यात्वेन कर्तृत्वादेराध्यासिकत्वादसङ्गित्वं जीवस्योक्तम् । सुषुप्तौ ब्रह्मैक्येन तदेवासङ्गित्वं दृढीकृतम् । तस्यैव पुनः प्रबोधेन अनित्यत्वशङ्कानिरासः । मूर्छाविचारेण श्वासादिसर्व–व्यवहारलोपेऽपि मरणे जीवनाशशङ्कानिरासः इत्यधिकरणचतुष्टयेन त्वंपदार्थः शोधितः । अनन्तराधिकरणचतुष्टयेन तत्पदार्थः । तत्रापि प्रथमेन ब्रह्मणो नीरूपत्वम् द्वितीयेन निषेधाविषयत्वम् तृतीयेनाद्वितीयत्वं चतुर्थेन व्यवहारदशायां फलदातृत्वं स्वरूपानन्तर्गतमपि शाखाचन्द्रन्यायेन उपलक्षणत्वात् प्रतिपादितमितितत्वंपदार्थौ शोधिताविति" इति मिताक्षरा रमणीयतरा लक्ष्यते ।

शङ्करानन्दरचितायां ब्रह्मसूत्रदीपिकायाम् द्वितीयाध्यायद्वितीय-पादोपक्रमे, "पूर्वस्मिन् पादे वेदान्ततर्कानुग्राहकाः सांख्यादितर्का निरस्ताः । इदानीं तेषां मध्ये वेदान्तनिरपेक्षा ये, तैः समन्वयस्य विरोधमाशंक्य तेषां दुष्टत्वप्रतिपादनेन अविरोधमाह" इति प्रस्तावना रचिता । मिताक्षरायां तदपेक्षया रमणीया प्रस्तावना दृश्यते । "पूर्वस्मिन् पादे स्वपक्षे परोद्भावितदूषणनिरासेन स्वपक्षः स्थिरीकृतः । इदानीं परपक्षदूषणार्थं द्वितीयपादः आरभ्यते । यद्यपि ईक्षत्यधिकरणे सांख्यमतं निरस्तं तथापि तत्रप्रधानविषयत्वेन वेदान्तवाक्यानां तदीयव्याख्यानं निरस्तम् । इहतु युक्तिबलेन प्रधानकारणत्वं तैः यदुपपादितं तन्निरस्यते इत्यपुनरुक्तिः" इति । एतेनावगम्यते यत् मिताक्षरायामावश्यकविवरणं लभ्यते, नातिसंक्षिप्ता न्यायमालावत् ब्रह्मसूत्रदीपिकेव च मिताक्षरा, सार्थकनामधेयवती सारगर्भिता चेति ।

" तर्काप्रतिष्ठानादप्यन्यथानुमेयमिति चेदेवमप्यविमोक्षप्रसङ्गः" २-१-११ इति सूत्रव्याख्याया अन्ते "अविमोक्षप्रसङ्गः" इत्यस्यापरा व्याख्या—आगमनिरपेक्षतर्कमात्रात् तत्वज्ञानं न सम्भवति, तर्काणां विप्रतिपत्तेः, सर्वज्ञानां कपिलकणभुगादीनामपि विप्रतिपत्तेश्च । तस्मात् तर्कमात्रजन्यब्रह्मज्ञानात् मोक्षो न सम्भवति" इति तत्रभवता रचितं विषयविवेचनकौशलं संग्रहरचनाकौशलं च प्रद्योतयति । भाष्यकारैः वर्णकान्तर-

मित्यनिर्दिश्य यत् प्रोक्तम् तत्राविमोक्षप्रसङ्गः इत्यस्य, व्याख्या अन्या अस्तीति निर्देशः तस्यान्यस्मिन् परिच्छेदे संक्षेपरचना चात्र लक्षणीये स्तः। आमूलाग्रं मिताक्षरावृत्तिरीदृश्येव चलति समग्रा वृत्तिः विषयविवेकस्य संग्रहनैपुणस्य च उदाहरणायते। स्थालीपुलाकन्यायेन द्रष्टुं असम्भवस्तु सतोऽनुपपत्तेः २-३-९ इति सूत्रमर्हत्तमं विद्यते। सूत्रवृत्तिः प्रस्तात्रनग्रा सूचिता। परिमिताक्षरैः प्रस्तुतविषयस्य हेतुः निर्दिष्टः। तन्न प्रमाण-भूता श्रुतिरुदाहृता प्रायश एषैवरीतिस्तत्रभवतो मिताक्षरायाः।

न केवलं संक्षेपरचना, अपि तु भाष्यपथानुसारेण शून्यवादनिरा-करणाय उपलब्ध्यधिकारस्य समन्वयः कृतः; तत्रभवतः मौलिकप्रतिभां शून्यवादज्ञानं च विशदयति। अद्वैतसिद्धान्ते स्वप्नस्यानिर्वचनीयत्वम् तस्मात् वैधर्म्याच्च न स्वप्नादिवत् इति सूत्रे पराभिप्रायेण स्वप्नदृष्टान्तः इति सूचना विहिता तत्रभवता बालानां सुखबोधाय। "अतात्विकत्वं प्रपञ्चस्य व्यवस्थापयितुं अबाधितमधिष्ठानं वस्तुभूतं वाच्यम्" इत्यन्न-म्भट्टरचना, "निरधिष्ठानकभ्रमो नास्ति, निरवधिकनिषेधोऽपि नास्ति" इत्यद्वैतसिद्धान्ताध्वप्रसिद्धवाक्ये ज्ञापयति।

क्वचित् स्थलेषु शाङ्करभाष्यादपि सुगमत्वमासादितं मिताक्षरया तत्रभवतः। तथाहि :... समाहारात् ३-३-६३ इतिसूत्रे

दुरुद्गीथपदस्य स्वरादिदुष्टमपीति विवरणम्, सूत्रस्यापि उदाहृत श्रुत्युक्तसमाहार एवार्थः इति वचनम्, दुरुद्गीथत्वमनुचिन्तनहीनत्वमिति केषांचिन्मतस्य प्रकाशनं च तत्रभवतो मिताक्षरायां सूत्रार्थं भाष्यापेक्षया सम्यग् विशदयन्ति :

तथैव, अग्निहोत्रादि तु तत्कार्यायैव तद्दर्शनात् ४-१-१६ इति सूत्रस्य भाष्यापेक्षया सरलता सुगमता नव्यार्थप्रकाशकता इत्याकारका गुणा मिताक्षरायां वीक्ष्यन्ते। "फलेननाशः न नाशतया व्यवह्रियते इतिविशेषाभिधानार्थमिदम्" इति विशेषश्चात्राभिहितः।

समाना चाशृत्युपक्रमादमृतत्वं चानुपोष्य ४-२-८ इति सूत्रवृत्तौ

तत्रभवान् भामतीतः भिन्नं पन्थानमारूढवान् । शङ्करभाष्यं च भामत्यनुकूलं प्रतीयते । अन्नम्भट्टस्तु पञ्चमीमविवक्षितां गत्वा चकारस्य (सूत्रे) सार्थक्यं सम्पादितवान् । विद्वदविदुषोः उत्क्रान्तिः समाना प्राणाश्रयत्वमपि समानम्... इति रीत्या चकारस्य स्वारस्यमापादितम् । समीचीन एवैषनवीनप्रकार उद्भावितः ।

एतेन सर्वे व्याख्याताः व्याख्याताः १-४-२७ इति सूत्रे "एतेन" इतिपदस्य एकविज्ञानेन सर्वविज्ञानप्रतिज्ञाविरोधेन इत्यर्थो वर्णितः न्यायमालायाम् । स एवोपादत्तः तत्रभवता अन्नम्भट्टेन । शाङ्करभाष्ये तु प्रधानकारणवादप्रतिषेधन्यायकलापेन इत्यर्थो वर्णितः । किं साम्प्रतमित्यत्र विचारे न महान् क्लेशो वर्तते । सर्वेषां भाष्यमूलकत्वात् वृत्तिव्याख्याविशेषाणाम् । एकविज्ञानेन सर्वविज्ञानप्रतिज्ञाशङ्करभाष्ये "प्रकृतिश्च प्रतिज्ञादृष्टान्तानुपरोधात्" इति सूत्रे वर्णिता । सैव युक्तिरलं भवति परमाण्वादिकारणवादप्रतिषेधे इत्यन्नम्भट्टस्याशयः । भाष्यकारैस्तु अधिकरणानुरोधेन प्रधानकारणादिप्रतिषेधन्यायकलापैकदेशेन कार्यसम्पत्तिरिति भाष्यानुगायिवृत्त्योराशयः । ततः भाष्याविरोधिसंक्षेपरचनैव वृत्तौ कृतेति यावत् ।

"उपसंहारदर्शनात् नेति चेन्नक्षीरवद्धि" २-१-२४ इति सूत्रे आचार्यपादैः सिद्धान्ते क्षीरदृष्टान्तो योजितः । विद्यारण्यपादैस्तु पूर्वपक्षे । तत्रभवानन्नम्भट्टस्तु शङ्करभाष्यानुसारमेव वृत्तिं रचितवान् । क्षीरं दध्येव भवति न तु तैलमङ्गारं वा, तदपि औष्ण्यादिबाह्यसाधनापेक्षयैव ब्रह्म तु विचित्रशक्तिमत्त्वात् बाह्यसाधनानि नापेक्षते इति वक्तुं क्षीरं पूर्वपक्षे योजनीयम् । तस्मात् न क्षीरवद्धि इति विभागः कर्तव्यः । एकस्मात् ब्रह्मणः आकाशवाय्वादिबहुविधसृष्टिजातं जायते किञ्च साधनान्तरमनपेक्ष्यते । तत उत्तरसूत्रानुगतभावानुसारेण न्यायमालारीतिरत्र वरीयसी नः प्रतिभाति । "साधनसामग्रया च तस्य पूर्णता सम्पाद्यते, परिपूर्णशक्तिकं तु ब्रह्म" इति भाष्यपंक्तिः क्षीरं पूर्वपक्षे योजयितुं प्रेरयति

"तइन्द्रियाणि तद्व्यपदेशादन्यत्र श्रेष्ठात्" २-४-२६ इति सूत्र-व्याख्याने तत्रभवानन्नम्भट्टः "मनषष्ठानीन्द्रियाणि" इति गीतावचनं मनसः इन्द्रियत्वे प्रमाणयति। ब्राह्मणपरिव्राजकन्यायेन मनोग्रहणं नेयम् इति-चाभिप्रैति। वेदवचनाधारेण मनुव्यासप्रभृतिविशिष्टानुरोधेन च मन एका-दशेन्द्रियमिति भाष्यानुमत्या चान्नम्भट्टः वृत्तौ प्रोक्तवान्।

भावन्तु बादरायणोऽस्ति हि १-३-३३ इति सूत्रविवृतौ तत्र-भवानन्नम्भट्टः भाष्यानुगुणमेव विस्तरेण व्याख्यातवान्। देवताप्रीति-रेव कर्मणां व्यापारत्वेन कल्प्यते, नत्वात्मसमवेतं अपूर्वाख्यं मानान्तरगोचरं कल्पनार्हम्। --- वस्तुतः सर्वान्तर्यामीश्वर एव सर्वत्र फलद इति तस्यैव प्रीतिः कल्प्यते" इत्युक्त्वा भगवाद्गीताश्लोकाभ्यां चैषोऽर्थः उपबृंहितः। अयं प्रसङ्गः अस्मिन् सन्दर्भे तत्रभवतः मौलिकप्रतिभां स्फोरयति। पूर्वोत्त-रमीमांसापारदृश्वना, वेदान्तसिद्धान्तपथारोहिणा केवलमेवं रचयितुं शक्यते। "फलमत उपपत्तेः" ३-२-३७ इति सूत्रस्य तात्पर्यं, पर्यालोच्य शारीरकमीमासायामदृष्टकल्पनाया अन्याय्यत्वमङ्गीकुरुते तत्रभवानन्न-म्भट्टः। "आप्रायणात् तत्रापि हि दृष्टम्" ४-१-१२ इति सूत्रे च न च यागादिवददृष्टद्वारैव उपासनानामपि मरणकाले प्राप्तव्यफलसाक्षात्काराक्षे-पकत्वमिति युक्तम्" इति स्पष्टमूचिवान्। पूर्वन्तु बादरायणो हेतु-व्यपदेशात्" ३-३-४१ इति सूत्रव्याख्यायां च ईश्वरप्रीतिव्यतिरेकेण कर्मजन्यापूर्वानङ्गीकारात्" इति विस्पष्टमावेदितं तत्रभवता। तस्मात् देवतानां ज्योतीरूपेणावस्थातुं, तं तं विग्रहं कृत्वा च व्यवहर्तुं सामर्थ्य-मस्तीति, मध्वादिविद्या अपहाय ब्रह्मविद्यायामप्यधिकारोऽस्तीति प्रस्तुतं वर्णयित्वा देवतोद्देश्यकहविस्त्यागेन देवता प्रसीदतीत्यादि सम्यग्विवेचितं तत्र-भवता। एतत्सूत्रादृते चतुस्सूत्र्यनन्तरं मिताक्षरायां नान्यत् सूत्रं विस्तरेण विशदीकृतं, प्रपञ्चितं च स्वयंकल्पितोदाहरणेनेत्यत्र नातिशयोक्तिः। तथाहि:- न च ग्रावादीनामचेतनानामदेवतात्वात् एतेनाश्वचरितादीनि व्याख्यातानि" इत्युदाहृतं तत्रभवता भारतीयवैदिकधर्मे विग्रहाराधनाया प्रयोजनवत्वम्.

नदीपर्वतशिलावृक्षानर्चयतां विशिष्टविज्ञानशालित्वं भारतीयानां च स्थापयति । सूक्ष्मेक्षिकया परिशील्यमाने पूर्वोत्तरमीमांसयोः क्रमपरिणाममखण्डज्ञानस्य च महिमानं तत्रभवान् विशदयत्यस्मिन् सूत्रे प्रसङ्गवशात् ।

साङ्गवेदविद्याधीतिना श्रौतस्मार्तक्रियाकलापविचक्षणेन परिपूतविद्यावंशजन्मवंशस्वचरित्रेण महाविदुषा केवलमेतदुदाहरणद्वयं दातुं शक्यते १ ज्योतिष्टोमे ऋत्विक् ग्रावाणं स्तौति । ग्रावाणः अनेन स्तूयन्ते इति ग्रावस्तुत् असावुच्यते; २ कृष्णयजुर्वेदे तैत्तिरीयसंहितायां सप्तमखण्डे प्रथमप्रपाठके एकोनविंशः अनुवाकः अश्वमेधप्रकरणे अस्ति "ईंकाराय स्वाहा ईंकृताय स्वाहा क्रन्दते स्वाहा अवक्रन्दते स्वाहा प्रोथते स्वाहा प्रप्रोथते स्वाहा" इत्यादि मन्त्रैः होमाः अनुष्ठीयन्ते । कल्पः :— "ईंकाराय स्वाहेंकृताय स्वाहेत्यश्वचरितानि" इति । प्रोक्षितस्याश्वस्य आलम्भनमकृत्वा उत्सर्गे कृते स्वन्दनरूपदोषः प्रसज्येत । तद्दोषपरिहारायाश्वचारितहोमाः कर्तव्या इति सिद्धान्तः । "यथा वै हविषः गृहीतस्य स्वन्दति एवं वा एतदश्वस्य स्वन्दति यत् प्रोक्षितमनालब्धमुत्सृजति" इति तैत्तरीयब्राह्मणम् । ग्रावस्तुत् इत्याकारकं विवरणं. " न च ग्रावादीनामचेतनानामदेवत्वात् प्रीत्यननुषङ्गः" इति प्रथमोदाहरणस्य । "ईंकाराय स्वाहा ईंकृताय स्वाहेत्यश्वचरितानि" इत्यादिकं विवरणं च "एतेनाश्वचरितादीनि व्याख्यातानि" इत्युक्तद्वितीयोदाहरणस्य । अश्वाधिष्ठातृदेवतासम्भवादश्वचरितहोमाः अर्थवन्तः इति यावत् ।

तथा चैतन्निरुच्यते ज्योतिष्टोमादियागदीक्षादक्षे श्रीमद्राघवसोमयाजिकुले तत्रभवानन्नम्भट्टः अवातरदिति, अद्वैतविद्याचार्यस्य च वेदान्तसिद्धान्तपारदृश्वा सुयोग्यः पुत्र इति, कृष्णयजुश्शाखाध्यायीति न केवल ग्रन्थान्तगद्यादिना ज्ञायते, अपि तु मिताक्षरा वृत्तिप्रमिताक्षरप्रतिपादितविषयसामंजस्येनेति ।

सर्वं शिवम्

श्लो· अन्नम्भट्टाः क्षमन्तां मा, जिज्ञासापथगामिनम् ।
सुविचिन्त्य चेति सूक्तिं " नकश्चित् नापराध्यति" ॥

ॐ तत् सत्

# परामर्शग्रन्थसूची

1. अर्थसंग्रहः,
लौगाक्षिभास्करप्रणीतः,
निर्णयसागरमुद्रणालयः, बाम्बे ।

2. अद्वैतगुरवः (आंग्लभाषायाम्)
कांचीकामकोटिशङ्करमन्दिरम्,
सिकन्दराबाद-1968,

3. अन्नम्भट्टस्य वंशवृक्षः,
श्री जि॰ यल्॰ सोमयाजुलु गारु,
अकौंट्स आफीसर् (डेप्युटेषन्)
षिप्यार्ड, विशाखपत्तणम् ।

4. आन्ध्रमीमांसादर्शनमु,
श्रीमल्लावझल सुब्बरामशास्त्रिणः,
दयानन्दकालनी,
वरंगल् ।

5. आन्ध्रविज्ञानसंग्रहकोशमु,
हैदराबाद्, ग्रन्थालयः,
आन्ध्रविश्वकलापरिषत्, वाल्टेर् ।

6. ईशादिदशोपनिषदः,
शङ्करभाष्ययुताः
मोतीलाल् बनारसीदास्,
वारणासी-1964

7. उपदेशसाहस्री,
रामकृष्णामिषन्,
मैलापूर, मद्रास् ।

8. कारिकावली,
मुक्तावलीसमेता,
चौखम्बासंस्कृतसीरीस,
बनारस् ।

9. काव्यप्रकाशः,
विद्याभवनसंस्कृतग्रन्थमाला,
चौखम्बाविद्याभवन,
वाराणसी ।

10. कृष्णयजुर्वेदतैत्तिरीयसंहिता,
ब्रह्मश्रीकुप्पालक्ष्मावधानिनः,
केदारेश्वरपेट,
विजयवाड–3

11. गरिकपाटि लक्ष्मीकान्तय्यगारु,
1-9-327, विद्यानगर,
हैदराबाद् – 44.

12. गौतमस्मृतिः,
हरदत्तमिताक्षरासहिता,
आनन्दाश्रमसंस्कृतग्रन्थावलिः,
पूना ।

13. जैमिनीयन्यायमालाविस्तरः,
आनन्दाश्रमसंस्कृतग्रन्थावलिः,
पूना ।

14. तत्त्वविवेकदीपनम्,
अन्नम्भट्टकृतव्याख्यानम्,
आर्. 2230. पेपर्, हस्तलिखितग्रन्थः,
असम्पूर्णः, ओरियण्टल्, हस्तलिखितग्रन्थः,
मद्रास्-5

15. तर्कसंग्रहः दीपिका च,
प्रस्तावना (अंग्लेय्यां) यशवन्तवासुदेव अथल्ये,
बांबे संस्कृतसीरीस नं यल् वी,
भण्डारकर ओरियण्टल इन्स्टिट्यूट्,
पूना-4




16. देवी भागवतम्,
वाविल्लरामस्वामिशास्त्रुल्लू,
(तिलुगुलिपि) चेन्नपुरि 1930
मद्रास् ।

17. नयविवेकः,
भवनाथमिश्रस्य,
वरदराजदीपिकाव्याख्यासहितः, ए. डि. हेच्.
पेपर, नागरीलिपिः 5. आर्. 2739, आर्. 5317
हस्तलिखितग्रन्थः, ओरियण्टल् मान्युस्क्रिप्ट् ग्रन्थालयः,
मद्रास् विश्वविद्यालये, मद्रास्-5

18. नवकाटलागुस् काटलागोरम्,
ग्रन्थालयः,
आन्ध्रविश्वकलापरिषत्,
वाल्टेर ।

19. न्यायकुसुमांजलिः,
काशीसंस्कृतग्रन्थमाला, 30
चौखम्बासंस्कृतसीरीस्,
वाराणसी-1

20 न्यायरक्षामणिः,
श्री यस्सार् कृष्णामूर्तिशास्त्री अण्ड् रामकृष्णशास्त्री
पब्लिषर, ए रामनाथन्,
223/सि· मारेडपल्लि वेस्ट्,
सिकन्दराबाद-26

21. पंचपादिकाविवरणम्,
मद्रास् ओरियंटल्सीरीस्,
नं सि· एल· वी·,
तात्पर्यंदीपिका भावप्रकाशिकासंवलितम्,
चौखम्बासंस्कृतसीरीस्,
बनारस्-1

22. पंचपादिकाविवरणम्,
तत्वदीपनभावप्रकाशिकासंवलितम्,
ई· जे· लाजरस् कम्पनी, 1949,
काशी ।

23. पातंजलयोगसूत्राणि,
नागोजीभट्टकृतवृत्तियुतानि,
उपोद्धातकर्ता· अभयङ्कर वासुदेवशास्त्री,
आनन्दाश्रमग्रन्थावलिः,
पूना ।

24. पण्डितराजवर्णपूरमु,
श्री ईयुण्णिवीरराघवाचार्युलु,
पंडितराजपंचामृतमु,
प्रचुरण 1959, आन्ध्ररचयितलसंघमु, हैदराबाद ।

25. प्रक्रियाकौमुदी,
रामचंद्राचार्यस्य,
बांबे संस्कृतप्राकृतसीरीस् नं· एल· एक्स· एक्स· 8

चौखम्बासंस्कृतपुस्तकालय,
बनारस् 1925

26. प्रौढमनोरमा,
चौखम्बासंस्कृतसीरीस्,
वाराण्सी ।




27. बृहती,
शाबरभाष्यव्याख्या,
प्रभाकरमिश्रविरचिता,
ग्रन्थाङ्क-25
मद्रास्युनिवर्सिटी संस्कृतसीरीस् 1964
मद्रास् ।

28. ब्रह्मसूत्राणि,
(आग्लव्याख्या) विश्वेवरानन्दरचिता,
अद्वैताश्रम,
5-दिल्ली अंटालीरोड,
कलकत्ता-14

29. ब्रह्मसूत्रमिताक्षरा, अन्नम्भट्टप्रणीता,
गवर्नमेन्ट, ओरियंटल्सीरीस्,
नं. 18 1950,
मद्रास्-5.

30. ब्रह्मसूत्रदीपिका,
शङ्करानन्दरचिता,
5131-518-236,
शासकीयसंस्कृतमहाविद्यालय,
ग्वालियर् ।

31. ब्रह्मसूत्रविवृति;,
श्रीविद्याशङ्करभारतीस्वामिनः,